श ॥ तत्रापि नीतिं दधती शलाकाव्याजेन जग्राह तृणं नु वक्रे॥ १२ ॥ श्रीवीरसंधा रसलालसत्वात् तद्बाधिनीं केवलबोधलक्ष्मीं ॥ अप्यायतामादरिणीं वरीतुं तृणाय मत्वा त्वमिव त्वमस्थाः ॥ १३ ॥ अपोढपंके कविनिर्निषेव्ये निरस्ततापे बहुभंगजाले ॥ विभो भवद्वाङ्मुखगांगपूरे दुर्वादिपूगास्तृणवत्तरंति ॥ १४ ॥ राकामये दिग्वलये समंतात् यशःशशांकेन कृते ध्रुवं ते ॥ कुहूध्वनिः केवलमेव कंठदेशं पिकानां शरणीचकार ॥ १५ ॥ जगत्त्रयोभासि यशस्तवेतत् क्व स्पर्द्धतां सार्द्धमनेन चंद्रः ॥ यस्यापरार्द्धेपि तृणस्य नैव प्रभाप्रभावो लभतेऽवकाशं ॥ १६ ॥ छत्रेंदुपद्मादिषु रूढिमात्रं त्वन्नाम्नि तु श्रीर्वसतीति मुष्टिः ॥ कुतोन्यथा तत्क्रपदीक्षितानां पुरःपुरो नृत्यति नित्यमृद्धिः ॥ १७ ॥ वसुभूतिसुतोपि कौतुकं वसुभूतेर्जनकः प्रणेमुषां ॥ भगवन्नभवोपि वर्तसे कथमंगीकृतसर्वमंगलः ॥ १८ ॥ नाधःकरोषि वृषमीश गणाधिपोपि धत्से सदा स यमपाशमपि प्रचेताः ॥ श्रीदोपि सत्रितयमालयवासकेलिस्त्वं पावकोपि हरसे हरहेतिपातं ॥ १९ ॥ यत्तपत्यपि कलौ जिनप्रभाचार्यमंत्रमनुशीलतां स्फुरेत् ॥ हेतुताऽत्र खलु तत्वदेकताध्यानपारमितयैव गृह्यते ॥ २० ॥ मयैवं दुर्दैवं शमयितुमलं भूष्णुमहिमा सुतस्त्वं लेशेन श्रुतरथधुरा गौतमगुरो ॥ कुरूद्योतं क्षीवद्दिनपतिसुधा गौतमसिमे प्रभो विद्यामंत्र प्रभव भवतो गौतम नमः॥ २१ ॥इति श्रीगौतमस्तवनं समाप्तम्॥

## ॥ अथ नेमिस्तवनं क्रियागुप्तं ॥

श्रीहरिकुलहीराकर, वज्रमणिर्वज्रपाणिना प्रणतः॥ त्वमवद्यमुक्त नेमे, प्रणमुषां शेमुषीमच्छिनां ॥ १ ॥ अवद्य ॥ मयि प्रसादप्रवणं कृपानिधे विधेहि शैवेय निजं मनस्तथा ॥ यथा जगन्नाथ मधुव्रत व्रतं भवे भवे तारकपादपद्मयोः॥ २॥भवे ॥ नयेन नेमे यदुवंशमौक्तिक श्रियानिवासस्तव पादपंकजं ॥ दुःखोर्मिसंघट्टविघट्टितात्मना तेनाति गंभीरतमे भवांबुधौ ॥ ३ ॥ आति ॥ दुर्नयार्णवमहातरीनिभाः स्यात्पदोपहितवस्तुविस्तराः ॥ पातकानि भवदीरिताःगिराऽजंतु जातशिवदानलालसाः ॥ ४ ॥ अजंतु ॥ प्रेंखन्नखश्रेणिमयूखलेखा निर्वासिताशावलयांधकारं ॥ अवार्यसौंदर्यविलास गेऽहं तवांघ्रियुग्मं शरणं प्रपद्ये ॥ ५ ॥ गे ॥ यस्त्वया ऋजुपथः सतां मतो देवखंडितकुतीर्थिकवर्गः ॥ तं प्रपद्य निरवद्यमुद्यता नेदयंति ननु मुक्तिपुरीं द्राक् ॥ ६ ॥ ऋदे ॥ वरिवस्याविधौ यस्ते सद्विवेकविनाकृतः ॥ तस्याभिमुखमीक्षंते न जातु सुखसंपदः ॥ ७॥ असत् ॥ कर्मकक्षावलीपावकं तावकं दुर्नयाहंकृतित्रासनं शासनं ॥ ये प्रपन्ना गुणस्नेहिनो देहिनस्ते सुराराध्यदुःखानि सुश्रियां ॥ ८ ॥ असुः ॥ विभवराज्यकलासुरराजतावरसणीरमणीभिरलं मम ॥ हृदि पदांबुरुहस्मरणं चते गिरि च तथ्यगुणस्तव

न तव ॥ ९ ॥ चत्ते ॥ जगज्जनश्रवणपुटामृतछटा तमोपहा सुजनितरा
गपेशला ॥ उदीरयन् गिरमिलदेशनावनावरा गतामयसुखसंपदा सता ॥
॥ १० ॥ अरा ॥ जव्यान् जवभ्रमणजीरुकचित्तवृत्तीन् सद्देशनाभिरनितस्त्वमुरुप्र
जाव ॥ दोषासमागमनिमीलितमब्जखडमाश्वासयेन्न किमुरश्मिनिरंशुमाली ॥ ११ ॥
आव ॥ जूत्याभिजूतपुरुहूतपुराभिरामता कुर्वति संततमहोत्सवजाजमुर्वरा ॥
स्वछंदनदशुमयानि महाद्भुतानि ते कल्याणकानि जुवनेश विजाव्य चेतसा ॥ १२॥
अयानि ॥ जास्त्वया भ्रमरविभ्रमवर्णो हे मुनीइ वपुषि प्रचरिलु. ॥ पापशात्रवनिब
र्हणकल्प ध्यानसततिरिवाश्रितमूर्ति ॥ १३ ॥ कहे ॥ डुर्वोध मे सपदि पदकीजूत
वास्तो पते सद्भृगश्रेणीकुवलयवनश्यामलछायकाय ॥ आकौमाराद्भुवनजयिनि
र्यस्य ते ब्रह्मवर्मे स्वै कादवैर्न खलु मदन स्प्रष्टमप्यक्रमीष्ट ॥ १४ ॥ श्य ॥ नाडानो
दनिनादयादवकुलश्रीकवपीठीलुठन् मुक्ताहारमहारथं रतिपति निर्जित्य जैनाजिरे
॥ कीर्ति कैरवकोमलामधिगत त्वामेव देव प्रजुं श्रीमन्नेमिजिनेइचइ शरण जीरुर्ज
वारातित ॥ १५ ॥ एमि ॥ सेवाहेवाकिन स्युस्तव पदयुगले येऽत्र जक्तिप्रयुक्तास्तेषा
देवा सदा पिप्रति हतविपद संपद सुप्रसन्ना ॥ चितारत्न प्रयत्नात् करतलकलि
त कुर्वता सर्वकाल काल नेतर्नराणामटति सुघटता नो मनोराज्यसिद्धि ॥ १६ ॥पि
प्रति ॥ जवताऽऽरि जयोद्धुरैर्यश प्रसरै शुक्लतया जगत्रय ॥ जिनसिद्धिरिति प्रसिद्धिजा
क् सुखसाम्राज्यमयी महापुरी ॥ १७ ॥ आरि ॥ अवगछतरा स्वसेवक मा जगवन्
या च शिवस्य वर्तिनी त्वं ॥ करुणार्द्रमना कुरु प्रसाद मयि तस्या सपदि प्रकाश
नेन ॥ १८ ॥ अवक् ॥ मरकतकमनीयकातिकाय त्वमजिनतेइ किरीटघट्टिताङ्घे ॥
चिरमिन मम चचरीकचर्या हृदय कुशेशयकोशमन्वजस्र ॥ १९ ॥ अय ॥ निखिलज
गता गोप्ता गुप्तक्रियास्तवसूत्रणादिति कृतनुति सानद श्रीजिनप्रजसूरीजि ॥ जव
तु जवता चेत्तुं जूयो जवभ्रमसजव जयमजयदो जीम श्रीमछिवातनय प्रजु ॥२०॥
इति श्रीनेमिजिनस्तवन क्रियागुप्त समाप्तम् ॥

## ॥ अथ श्रीवर्द्धमानस्तवनप्रारज ॥

कसारिक्रमनिर्यदापगाधाराशुद्धविराट्लदवि ॥ वदोभिर्विविधैरधीरधी स्तोष्येऽह
चरम जिनेश्वर ॥ १ ॥ त्रैलोक्यनेतस्तव डुर्नयालीनिर्नाशन शासनमाश्रितो य ॥ त
स्येंद्रवज्रायुधमाविरस्ति डु कर्मशैलेइजिदाविधाने ॥ २ ॥ किमेकमाश्चर्यकर न ते यत्
पुष्पधयोप्येष विशेषविज्ञ ॥ त्यक्तोपजातिभ्रमणाभिलापस्त्वदगसौगध्यमनुप्रयाति
॥ ३ ॥ य सृजत्यजर सौरजतारैरखुजैस्तव पदांबुजपूजा ॥ प्रेत्य तस्य दिवि देवमृ

गाद्भ्यः स्वागतानि निगदंति सरागं ॥ ४ ॥ वाजिवारणरथोद्धतानटैरुन्नटा सुजग जोगजंगिनृत् ॥ राज्यऋद्धिरुपनम्रमीति तं नंनमीति तव यः पदौ मुदा ॥ ५ ॥ नाकिनिकायकरप्रहतानां संप्रसरन् गगने मरुजानां ॥ जन्ममहे तव कस्य न जज्ञे दत्तमदो धकधोंकृतिनादः ॥ ६ ॥ ये जक्त्यात्तभ्रमरविलसिता जङ्गुः पादांबुरुहि तव विनो ॥ तैः श्रेयः श्रीमधुरमधुररसास्वादो सादात् समजनि कृतिनिः ॥ ७ ॥ तत्वा तत्वारोपलोपप्रवीणां प्रव्हप्राणित्राणसंस्थाधुरीणां ॥ आज्ञां धत्ते मौलिना जव्यजंतुश्रेणिः श्रद्धाशालिनी तावकीनां ॥ ८ ॥ वसुधाम सुधामयवक्र विधो तव जाषितमाद्रियते जुवि यः ॥ स सुखानि सुखानिरिवोद्यमणीन् विनृते परितोऽटककीर्तिनरः ॥ ९ ॥ स्रग्विणी कुंडलभ्राजिगल्लस्थला तारहारद्युतिद्योतिवक्षस्तटा ॥ राजिराखंमलानामखंडादरा पादपीठे लुठत्तावके पावके ॥ १० ॥ क्षणादेव तेषां शिवश्रीजुजंगप्रयातं विवृद्धिं ध्रुवं कर्म पुंसां ॥ जवन्नाममंत्रस्य वर्णानुपूर्वी रसज्ञाग्रवर्तिस्फुरापादिता यैः ॥ ११ ॥ द्रुतविलंबितमध्यरवध्वनद् विविधतूर्यमनेकमणीमयं ॥ कुसुमवर्षचितं तव देशनावनितलं कइवैत्य न मोदते ॥ १२ ॥ मुकुरोज्वले गणनृतां हृदये प्रमिताक्षरापि बत वाक् जवतः ॥ अनियत्तया प्रतिपफाल जिनध्वनितोऽर्थतश्च जगदर्च्यधियां ॥ १३ ॥ जगत्प्रजो जक्तिजरादनुद्विजा द्विजातिवंशादपहृत्य कृत्यवित् ॥ नरेंद्रवंशस्थमचीकरच्चीपतिर्जवंतं हरिनैगमेषिणा ॥१४॥ वाचां ते निखिलनयाविरोधिनीनां डुर्बोधद्रुमदलने कुगरिकाणां ॥ माहात्म्यं जुवनमनः प्रहर्षिणीनां निर्वक्तुं कइव यथावदस्तु शक्तः ॥ १५ ॥ सिद्धार्थराजकुलनंदनपारिजात न भ्राम्यति क्व तव कीर्तिरपारिजात ॥ वर्णेन डुग्धमधुरेण मतोजनागसिंहोद्धता स्थिरतया सुमनोजनाऽग ॥ १६ ॥ अति महति जवोर्मीमालिनीह भ्रमंतो जननमरणवीच्या घातदोदूयमानाः ॥ कथमपि पृथुपुण्याः प्राणिनः प्राप्नुवंति प्रवहणमिव केचिच्छासनं तावकीनं ॥ १७ ॥ लवणिमतर्जितस्मरपुरंध्रिरूपदर्पा घटितकटाक्षलक्षशरविद्धकामिमर्मा ॥ कनकमणीमयाजरणरश्मिरंजितांगी व्यजयत वाणिनी न जवतः समाधिमुद्रां ॥ १८ ॥ प्रबोधं जव्यांनोरुहवनमधीशाधिगमयन् हरन् मोहध्वांतं परसमयताराः कवलयन् ॥ निविष्टः सिंहासन्यलममलजामंडलयुतो जवानाजातिस्मोदयशिखरिणीव द्युतिपतिः ॥ १९ ॥ अमितदमितस्त्रोतो माद्यत्तुरंगमसंगमत्रिदशहरणीनेत्रो नेत्रत्रिजागविलोकितैः ॥ तव जिन मनः शेके कर्तुं मनागपि न स्वसाच्चलयितुमलं किं हेमाद्रिं युगांतमहाबलाः ॥ २० ॥ दारिद्र्यापत्परिजवजनुर्विस्वसामृत्युडःखैरार्ताः के के न तव बलवद्देवसेवां प्रपन्नाः ॥ किं स्याद्रोग

प्रशमनपटोरोषधस्योपयुक्तौ मंदाक्रांता जगति जनता डुसहेनामयेन ॥ २१ ॥ शरडुदितनिशाकराशुप्रभा जैत्रकीर्तिछटाधवलितनिखिलत्रिलोकीतलं श्रद्धयोपासते ॥ सरभसविनमत्सुराधीशचूडामणिज्योतिषामरुणितपदपीठमूर्मिनिरेप्यछविस्त्वां प्रभो ॥ २२ ॥ बिभ्राणो नखविक्रिया भयकरी धूतोल्लसद्वालधीरोङ् शब्दमनीचकै प्रकटयन् भूयोवनीकादृत ॥ त्वद्भक्त्या भृतकोप्यवाप्य नृपता मांसादरवर्धयन् धत्तेऽनेकपराजिदर्पदलने शार्दूलविक्रीडित ॥ २३ ॥ विद्यामंत्रैर्न कार्यं सुरतरुनिरलं वित्तेन च मृत पर्याप्तं राज्यलक्ष्म्या रुतममरतया ह्यास्तां सुवदना ॥ स्फूर्जत्वेका तु भक्तिस्त्वयि मम मनसि ध्वस्ताखिलमला कैवल्यश्रीर्यया स्यात् करतलनिलया साऽन्हाय भगवन् ॥ २४ ॥ श्रीवीर सर्वदिक्कै कनकरुचिलभूरोचिरुद्दीप्रदीपैर्मंगल्य सोस्तु दीपोत्सव इव जगदानदसंदर्भकंद ॥ सूक्तिर्जैनप्रभीय मृडुविशदपदा स्नग्धराधीयमाना भव्यानां भव्यभूत्यै भवतु भवतुदे भावनाभाविताना ॥ २५ ॥ इति श्रीवर्द्धमान स्तवन समाप्तम् ॥

## ॥ अथ चतुर्विंशतिजिनस्तवन ॥

कनककांतिधनु शतपंचकोन्नितवृषांकितदेहमुपास्महे ॥ रतिपतेर्जयिनं प्रथमं जिनं भूवृषभ वृषभ वृषभजिन ॥ १ ॥ द्विरदलांछित वांछितदायक क्रमलुठत्रिदशासुरनायक॥ स्तुतिपर पुरुषो भवति क्षिता वजित राजितरा जितराग ते॥ २॥तुरगलांछनसंभव संभवत्यहृदि जिन यत्र रसादह ॥ हृदि दधे भणितीर्गुणभूरुहा शमहिता महितामहि तावकी ॥ ३ ॥ भवमहार्णवनिस्तरणेछया त्वमभिनंदन देव निषेव्यसे ॥ व्रतभृता कुगते स्मरनिग्रहप्रसभया सभया सभयात्मना ॥ ४ ॥ त्रिभुवनामितकामितपूरणे सुरतरोरुपमामतिगामुकौ ॥ तव विभो भजते भवतः क्रमावसुमते सुमते सुमतेर्दद ॥ ५ ॥ धरनृपात्मज षष्ट जिनेश्वर त्वयि कृतप्रणय क्रियते पति ॥ रभसत प्रथितार्थिदरिद्र तोपरमया रमया रमयान्वित ॥६॥ प्रभुसुपार्श्वजगत्रितयाङ्गनु पवितकाशिपुरीकवीलक्ष्मण ॥ सुकृतिन कृतिनश्चरितं विडु शुभवतो भवतो भवतोदनं ॥ ७ ॥ कुनयकाननभजनकुजरा शशिरुचे महसेन सुत प्रभो ॥ निखिलजीवनिकायहितोक्तिभि शुभवदा भवदा भवदागमा ॥ ८ ॥ युधि विजित्य मनोभवमग्रहीन्मकरमंकमिपादध्वजमस्य य ॥ स्तुतजना सविधि कुदृशा सुरस्तुतमसतमस तमसस्तुत ॥ ९ ॥ दृढरथागजशीतल शीतलद्युतिकलाविमला तव भारती॥ मनसि कस्य न हर्षसनाथता जिन ततान ततानततायिनी॥१०॥

जयति गंडकलक्ष्मतनुर्जिनः शशिमुखोंबुजदृक् दशमोत्तरः ॥ कनकदीप्तिरमार्पितहीर कस्तवरदो वरदो वरदोर्युगं ॥ ११ ॥ शुभमयी वसुपूज्यसुत प्रभो भुवननेत्रमहो महि षांकिता ॥ तव तनुर्वितनोतु सुखं सतामरुचिरं रुचिरं रुचिरंजिता ॥ १२ ॥ सकलस त्वसरोजविकासने रविरुचिर्विमल त्रिजगत्पते ॥ अपि शर्म नयते तव गीर्जिनामृत रसा तरसा तरसा तृषं ॥ १३ ॥ निजयशोभरनिन्हुतजान्हवीजलवलक्षिमकीर्तिरनं तजित् ॥ दिशतु वः कुमतासुरनिग्रहे भृशमनःशमनः शमनश्वरं ॥ १४ ॥ भवभयं तव धर्म धुनोतु वाक्श्रुतिपथाऽतिथितां गमिता सती ॥ किमु करोति न पित्तरुजः शमं वरसिता रसिता रसिताशुपा ॥ १५ ॥ जयति शांतिजिनः स्म जगंति या भटचमूर्यु धि मोहमहीपतेः ॥ रणकथामपि भक्तिभरेण ते ससहसा सहसा सहसाऽमुचत् ॥ १६ ॥ अवति कुंथुजिनाधिपराज्यमाहिमवत स्त्वयि चक्रहताहितं ॥ त्रिदिवतोऽन्य धिका जनि ऋद्धिर्निर्धनरसा नरसानरसारकिं ॥ १७ ॥ जगदधीश सुदर्शन भूमिपान्वयपयः सरिदीश निशामणे ॥ प्रणिदधेऽतिषदो विशदव्रता वनरतानरता नरतावकान् ॥ १८ ॥ हृदि नरस्तवमल्लिजिनस्मरन्नपि हि मूर्तिमुपैति महत्फलं ॥ निशमयन् समताकरु णांचितां किमुदिता मुदिता मुदितादरः ॥ १९ ॥ त्वमिन सुव्रत कच्छपलांछनो जनरुचि र्हरिवंशविभूषणः ॥ शिवसुखाय तपः परसुज्झिताऽशुभवनो स्वनो भवनोधिपा ॥ २० ॥ विरतिवर्म तटाहतिकुंठितस्मरशरः शरणीक्रियतां त्वया ॥ गुणगणस्य नमिर्बुधवर्ह ण व्रजनभा जनभाजन भावभाक् ॥ २१ ॥ अनुमितं खलु नेमिविभो भवभ्रमणतो मयका यदि यच्चिरं ॥ महितपादभवान् भवतः कृपाभवनमानवमा वनमालिना ॥ २२ ॥ कमठशासन पार्श्वशिवंकरे रमतएव मनः प्रियधर्मणां ॥ अपि कुतीर्थ्यज नेन दुरात्मना तव मतेऽवमतेऽवमतेजसः ॥ २३ ॥ त्रिजगदीक्षण केसरिलक्षण क्ष णमपि प्रभुवीर मनोगिरौ ॥ गुणगणान् मम मास्म विरज्यतामुदयिता दयितादयि तावकान् ॥ २४ ॥ च्युतिजनुर्व्रत केवलनिर्वृतिक्षणदिनाददतां मुदमार्हताः ॥ व्यरचि यैरुपयत्रिदशैर्दृशां नवसुधा वसुधा वसुधामभिः ॥ २५ ॥ इति जिनप्रभवोमयकाऽति मक्रमगतैर्यमकाऽवयवैर्नुताः ॥ बलममी वितरंतु धुरिस्थिताः शुभवतां भवतां भवतां तिभित् ॥ २६ ॥ सदुपदेशकर प्रसरद्दिताऽखिलतमस्कतया तपनोपमाः ॥ ददतु तीर्थ कृतो मम निर्ममाः शमरमा मरमाऽमरमानिताः ॥ २७ ॥ जयति दुर्नयपंकजिनीवने हिमततिर्मतिकैरवकौमुदी ॥ शमयितुं तिमिराणि जते महावृजिनभाजि न भाजिनभार ती ॥ २८ ॥ करकृताम्रफला प्रणती जिनप्रभवतीर्थमिभारिमधिश्रिता ॥ हरतु हेमरु चिः सुदृशां सुखव्युपरमं परमं परमंबिका ॥ २९ ॥ इति चतुर्विंशतिजिनस्तवनं समाप्तं ॥

# अथ श्रीमहावीरस्तवनप्रारंभ

पराक्रमेणेव पराजितोऽय सिंह सिषेवे धृतलक्ष्मदम्भ ॥ सुखानि व स्वामिरय र
माणा द्वैमातुरस्तीर्थकर करोतु ॥ १ ॥ सप्ताश्वतेजा कररसकोश्च कर्मेधसप्ता
मिरसप्तभीति ॥ प्रणीतवान् सप्तशती नयाना वीर श्रिये व्यजितसप्ततत्त्व ॥ २ ॥
शक्रानत प्राणतकल्पपुष्योत्तरात्वमाषाढवलक्षषष्ठ्या ॥ देवाधिदेव द्विजदारदेवा
नदोदरेऽभूर्विहितावतार ॥ ३ ॥ इयस्य नद्यादसिता त्रयोदशी ह्यशील्यहानत
तरमीशितस्तत ॥ सुरेशसेनापतिदेशिताध्वना क्षात्रं कुलं यत्र पवित्रित त्वया
॥ ४ ॥ प्रभूतभूतिद्युभवद्भुवा भवद्भानुर्महे नोऽजनि हेजिन ध्रुवम् ॥ जगत्त्रयीजतु
षु हर्षवर्षिणी निरूढरूढिर्मदनत्रयोदशी ॥ ५ ॥ त्वया स्वदेहद्युतिसविभागसभावि
त हेम सुवर्णमासीत् ॥ तारत्तु हीन त्वदनुग्रहेण दुर्वर्णमित्यापदवर्णवाद ॥ ६ ॥
बाल्ये विबोधाय हरे सुराद्रि पादाग्रतुन्नस्तव यच्चकंपे ॥ चित्रीयता त्वत्तरसा रसात
न्मूर्धानमाधूनयतिस्म नून ॥ ७ ॥ बभूव भाग्यातिशयप्रभावात् गुरुस्तवापि त्रिजग
द्गुरोर्य ॥ युक्त्यैव तं मेरुगिरेर्गरिष्ठं सिद्धार्थमप्यार्यगणा गृणति ॥ ८ ॥ कथं गु
णै प्राप्तयश पताका नारीषु नास्तु त्रिशलाशलाका ॥ यत्कुक्षिशुक्तौ विमल सुवृ
त्तो मौतिक्यभूस्त्व गुणयुक्तिहृद्य ॥ ९ ॥ दिवि प्ररूढं सुरमीश मुष्टिघातेन यद्धाम
नतामनैषी ॥ गर्वाद्रिखर्वीकरणश्रम तु चकर्ष तीर्थेश्वर शैशवेन तत् ॥ १० ॥ मो
क्षं गमी य खलु तद्भवेपि गतु कथ सोर्हति लेखशाला ॥ इतीव शक्रोऽपललाप
पित्रोरभौचिति ते विनयेन धीमान् ॥ ११ ॥ व्याकुर्वतस्ते हरये यदागम सगृह्य बु
व्या कतिचित् गिरा लवान् ॥ अध्यापको यद्दिदधे तदुच्चकैरैद्रं भुवि व्याकरण प्र
थामगात् ॥ १२ ॥ यस्या न कस्योदितमुक्तिमार्गमार्गस्य कल्पा दशमी शमीश ॥ प्रा
ज्यं प्रभो यत्र विसृज्य राज्य श्रमण्यसाम्राज्यमुपायथास्त्व ॥ १३ ॥ शिवालये प्रो
ज्झितविग्रह यत् त्वत्पादमूले चमर निलीन ॥ जनारिदम्भोलियम प्रचडो नस्म
ग्रुमाप्यैष्ट किमत्र चित्र ॥ १४ ॥ न बाधितु जातु दधु समर्थता मुनीद्र धातोरि
व नान्ववर्त्तिषु ॥ समाधिरूढा प्रकृतार्थसपद तवोपसर्गा व्यशिषंस्तु केवलं ॥ १५॥
न कौशिके रागमुपासनापरे करोषि रोष स्म न चर्मकौशिके ॥ अहो उदासीनत
यैव निर्जिता चमूस्त्वया दुर्विषहापि कर्मणा ॥ १६ ॥ निबर्हितुर्गां सुर
भर्तुरुग्रतस्तथा तथा यो दुरचेष्टत त्वयि ॥ बहि कृत स्वर्गिसमाजसगमा

तु ससंगमः स्यान्नकथं जनंगमः ॥ १७ ॥ एकाग्रपङ्क्तित्रिशतावसाने श्रीवीरती
रे ऋजुवालिकायाः ॥ तवोदगात् केवलऋद्धिरस्ताऽपराधराधस्य शुचौ दशम्यां
॥ १८ ॥ एकाक्रमाद्दुर्मुनयः कथं मामितीव कोपात् त्वदुपर्यशोकः ॥ अदीदृशत् षट्
पदगर्भपुष्पव्याजस्फुरत्तारकदृक्सहस्रं ॥ १९ ॥ सुरैर्विकीर्णास्तव देशनावना बभुः
प्रसूनप्रकराः समंततः ॥ भयश्लथीभूतकरात्परिच्युताः शराइवानंगभटस्य कौसुमाः
॥ २० ॥ स्फुटीभवन्मालककौशिकीमुखप्रशस्तरागस्तवसंस्तवोचितः ॥ प्रविश्य दि
व्यः श्रवणाध्वनि ध्वनिर्मुदे न केषां रजयन् मृगानपि ॥ २१ ॥ स्थातुं चलच्चामर
युग्मकैतवात् त्वदीयदंतद्युतिजाह्नवीजले ॥ ध्रुवं त्वदास्यांबुजवासिभारती युग्ये
उपेतां कलहंसदंपती ॥ २२ ॥ स्थैर्यं हृतं यद्भवता शिशुत्वे तद्याचनाय स्फुटमे
ष मेरुः ॥ स्वयंसमागादिति तुंगहेमसिंहासने ते करवंति तर्कं ॥ २३ ॥ हंतुं क्षमो
हं तम एकमेव तद्देहि मेसर्वतमोपहत्वं ॥ इतीव विज्ञापयितुं सिषेवे भामंडलच्छद्म
धरो रविस्त्वां ॥ २४ ॥ दूराद्भराजन्मभिदे भवभीः सुधासपीत्यै त्रिजगज्जनौघं ॥
नूनं नदन् संसदि देवदेवैर्दिव्याहतो डुंडुभिराजुहाव ॥ २५ ॥ मेदं प्रमाणांतरद
र्शितं सन्नमंस्यते सर्वं इतीव पुंसां ॥ सितातपत्रत्रितयच्छलेन रत्नत्रयं दर्शयतिस्म सा
क्षात् ॥ २६ ॥ सुपर्वसंचारितहेमपंकजापदेशतश्चंक्रमणक्षणे किल ॥ गतस्पृहस्या
पि गुणैर्वशंवदाः पदोस्तले ते निधयो नवालुठन् ॥ २७ ॥ त्रैलोक्यसंयुक्तनिरंकुशश्रि
प्राकाररेखात्रयवेष्टितांगं ॥ नैक्षंत धन्याः कतिनाम रक्षायंत्रोपमं त्वां सुमनोर्चनीयं
॥ २८ ॥ त्वत्प्रातिहार्यश्रियमित्यवेक्ष्य चेतो न यस्येश चमच्चकार ॥ स केवली चेन्न
तदा ऽस्तु तस्य नरभ्रुवस्याजननिर्जगत्यां ॥ २९ ॥ अनिंद्यविद्यावदनेंदुदर्पणा गणा
धिपास्ते यदसूत्रयन् श्रुतं ॥ गिरस्तवैव त्रिपदीसुधाकिरः सतां मनःस्वप्रथितेन गौ
रवं ॥ ३० ॥ अशेषभाषापरिणाममंजुलं विचित्रसंदेहविषांतवञ्जलं ॥ स्तुवे वच
स्ते नयनिर्विरोधता विधायि संबोधविधौ निबंधनं ॥ ३१ ॥ तप्त्वा तपः षष्ठमपास्तभ
व्यलोकार्तिकः कार्तिकदर्शरात्रौ ॥ अपापमापुः पदमीश पापा पुर्यां द्वियुग्सप्त
तिवत्सरायुः ॥ ३२ ॥ स्वे यत्र बुद्धे सति फल्गुनीषु जाले स्मरोऽभून्मृतकल्पमानी
तद्विश्ववंद्योत्तरफल्गुनीषु बभूव कल्याणकपंचकं ते ॥ ३३ ॥ भुवनाधिपतेरनंतसा
भवत. स्वातिगतेऽत्र भाधिपे ॥ उदयाद्युचितं घनाघनोदकयोगान्नवमौक्तिकश्रि
या ॥ ३४ ॥ ज्ञातेक्ष्वाकुकुलप्रदीप भगवन् वंदारुवृंदारकश्रेणीरत्नकिरीटकांतिलहरी
संलाप्यमानांह्रये ॥ मोहोर्वीपतिगर्वपर्वतभिदि व्याधामधामश्रियामश्रांतं जिनसिं
हसूरिमहित श्रीवीर तुभ्यं नमः ॥३५॥ इतिस्तुतिपरायणे त्रिजगदेकचूडामणे प्रसीद

परमेश्वर स्वरसन्नक्तिनम्रे मयि ॥ नवेन्मम नवेनवे नवडुपासनावासना जिनप्रनवस विदा वरद पूर्णमेतावता ॥३६॥ इति पचकल्याणिकमय श्रीमहावीरस्तवन समाप्तम्॥

## ॥ अथ श्रीमत्रस्तवनप्रारंन ॥

स्व श्रिय श्रीमदर्हत सिद्धा सिद्धिपुरीपद ॥ आचार्या पंचधाऽऽचार वाचका वाचना वरा ॥ १ ॥ साधव सिद्धिसाहाय्यं वितन्वतु विवेकिना ॥ मगलाना च सर्वेषा माद्यं नवति मगलं ॥ २ ॥ अर्हमित्यक्षर माया बीज च प्रणवाक्षर ॥ एन नानास्व रूप च ध्येय ध्यायंति योगिन ॥ ३ ॥ हृत्पद्मषोडशदलस्थापित षोडशाक्षर ॥ पर मेष्टिस्तुतेर्बीज ध्यायेदक्षरदं मुदा ॥ ४ ॥ मत्राणामादिम मत्र तत्रं विघ्नौघनिग्रहे ॥ ये स्मरति सदैवेनं ते नवति जिनप्रना ॥ ५ ॥ इति श्रीजिनप्रनविरचित मत्रस्तवन समाप्तम् ॥

## ॥ अथ श्रीवर्द्धमानस्तवनप्रारंन ॥

श्रीवर्द्धमान सुखवृद्धयेऽस्तु यश प्रतापैरनिवर्द्धमान ॥ सिद्धायिका रक्षति यस्य तीर्थे विघ्नौघत सततमेव देवी ॥ १ ॥ जिनेद्र नेद्रा अपि तावकीना स्तोतु गुणान् शक्तिजुषस्तथापि ॥ नक्त्येरितस्तान् कतिचिन्नवीमि नाज्ञ स्वमात्रा विविनक्ति वीर ॥ २ ॥ नयाध्वना नाथ कृतैकमत्यैरश्रातमेकातहितोपदेशै ॥ करैरिवोत्पद्युति ना तमिस्रास्त्वया नताना नवनीर्निरासि ॥ ३ ॥ प्रणीयतेऽस्माद्भुतरत्नचित्रै स म विमानैस्त्रिदशागमेन ॥ कल्याणकैर्नूवलयं त्वदीयैस्त्रिविष्टपान्यूनमनूनऋद्धि ॥ ४ ॥ नवतमीश नजतोऽनुजातु दु खान्यलकानि च नापि तापै ॥ पाणिस्थचितामणिमग नाज का निर्वृति पीडयितु शशाक ॥ ५ ॥ सर्वप्रना मोहतम समूहव्यापादने मशयव छिदात्री ॥ त्वद्देशनावाग् जयति त्रिलोकीलोकस्य कर्णामृतवृष्टितुल्या ॥ ६ ॥ रिपून् विजित्यातरगानगाधवीर्येण सतृज्ञानरमा निवेश्य ॥ करयंकार्पीरिन मुक्तिपुर्या सा म्राज्यमज्यानि सुखोत्करेण ॥ ७ ॥ निस्सेव पीयूषनुजा जनस्य मथ्नाति मिथ्यात्व विषोर्मिपूर ॥ तव प्रना नेत्रपुटैर्निपीता रुतस्थितिर्वर्ष्मणि नि कलंके ॥ ८ ॥ वृत्ताष्ट काद्यक्षरनामधेयैस्तदल्पवर्णाहितनामकेऽन्हि ॥ इय स्तुतिर्वीरजिनस्य दृष्टा करोतु क ल्याणमनुत्तर व ॥ ९ ॥ इति जिनप्रनसूरिकृत श्रीवर्द्धमानस्तवन समाप्तम् ॥

## ॥ अथ श्रीपार्श्वस्तवनप्रारन ॥

पार्श्व प्रनु शश्वदकोपमान दकोपमानं नववन्हिशातौ ॥ आराधता दत्तनिरतरा य निरतराय पदमाशुमीडे ॥ १ ॥ वीक्ष्ये जगन्नेत्र महान्न यत्र महानयत्रस्य तवाङ्घ्रि

युग्मं ॥ पुण्यः स एवाऽवसरोऽमराली सरो मरालीव निषेवते यत् ॥ २ ॥ प्रणेमुपां पूर्णसमस्तकामं समस्तकामं सकृदप्यधीश ॥ नवंतमानम्य विमानमाया विमानमायाः प्रनवो नवंति ॥ ३ ॥ नयाढ्यमुद्यज्ञमनंगमाल मनंगमालक्षितसर्वनावं ॥ केनौम धीमद्भिरमानि शांतं रमानिशांतं न वचस्त्वदीयं ॥ ४ ॥ नित्यं प्रमादेनविना शितामं विनाशितामंगलमंगनाजां ॥ त्वन्नाम धन्यः स्मरतीश सारं रतीशसारंगमृगेंद्रनादं ॥ ५ ॥ नृत्योपि योत्राऽवृजिनप्रनावे जिनप्रनावैकरसस्त्वयि स्यात् ॥ सरूपवान्नीरगजाश्वसेने गजाश्वसेनेश्वरतामुपैति ॥ ६ ॥ नूयान्नमो नीलतमाऽलकाय तमालकायप्रन तुन्यमेव ॥ नवात्त्वदन्यः कतमोऽविता न तमोवितानच्छिडुरोऽर्क एव ॥ ७ ॥ त्वडुक्तकृत्येष्वविरामवामे विराम वामेय मयि प्रसीद॥नव्यान् स्तवः पातु जिन प्रनोऽयं जिनप्रनो यं विदधे यतींद्रः ॥ ८ ॥ इति जिनप्रनसूरिविरचितं श्रीपार्श्वस्तवनं समाप्तम्॥

## ॥ अथ श्रीपार्श्वनाथस्तवनप्रारंनः ॥

श्रीपार्श्वपादानतनागराज प्रोत्सर्पदेनःकफनागराज ॥ सतां हृताऽसत्परिणामरागं त्वां संस्तुमः स्थैर्यगुणाऽमराऽगं ॥ १ ॥ ये मर्त्यदेवासुरमाननीयं पश्यंति ते श्रीन रमाननीयं ॥ सद्यस्त्रिलोकीतिलकाऽमितानि सिध्यंति तेषामिह कामितानि ॥ २ ॥ दृशोर्द्वयं पद्मदलानुकारं नाशिश्रयत्ते कमलानुकाऽरं ॥ कुतोऽन्यथा त्वन्नतिदीक्षितेषु सर्वश्रियां प्रेम तदीक्षितेषु ॥ ३ ॥ अन्यर्हितं नव्यकदंबकानां हर्षप्रकर्षान्नसदंबकानां ॥ सेवंति ये त्वां विधिवन्नजंते निर्वाणसौख्यं बुधवन्नजंते ॥ ४ ॥ रतेरहंकृत्यपनायिकानि र्वपुःश्रिया ते सुरनायिकान्निः ॥ नाक्षोनि चेतः परनावलीनमचिंत्यविस्तारि शुनावलीनं ॥ ५ ॥ प्रनो तवाऽस्तस्मरराजमाने नखांशुजालेन विराजमाने ॥ क्रमांबुजे लक्ष्मिगृहे रसेनशक्रार्चनीय स्तुमहे रसेन ॥ ६ ॥ आकांक्षिता बहुविधं जनतानिरामाऽस्पृष्टामहोदयपुरी ध्रुवतानिरामा ॥ अप्यध्वरश्रुतितपःसवनादृते न पुंसाऽऽप्यते जिन तव स्तवनादृतेन ॥ ७ ॥ इत्थं फणींद्र सततश्रितपार्श्व नाऽथ स्त्री वा स्तवं पठति यस्तव पार्श्वनाथ ॥ तस्मै स्पृहामवृजिनप्रनवाय नव्या लक्ष्मी र्विनर्ति सुमनःसमवायनव्या ॥ ८ ॥ इति जिनप्रनसूरिविरचितं श्रीपार्श्वनाथस्तवनं समाप्तम् ॥

## ॥ अथ श्रीनंदीश्वरकल्पप्रारंनः ॥

आराध्य श्रीजिनाधीशान् सुराधीशार्चितक्रमान् ॥ कल्पं नंदीश्वरद्वीपस्याचक्षे विश्वपावनं ॥ १ ॥ अस्ति नंदीश्वरोनाम्नाऽष्टमोद्वीपो द्युसंनिनः ॥ तत्परिक्षेपिणा नंदीश्वरेणांनोधिना युतः ॥ २ ॥ एतद्वलयविष्कंने लक्षाशीतिश्चतुर्युता ॥ योजना

नां त्रिपष्टिश्च कोट्य कोटीशत तथा ॥ ३ ॥ असौ विविधविन्यासोद्यानवान् देव
भोगभू ॥ जिनेन्द्रपूजासंसक्तसुरसंपातसुंदर ॥ ४ ॥ अस्य मध्यप्रदेशे तु क्रमात्
पूर्वादिदिक्षु च ॥ अंजनवर्णाश्चत्वारस्तिष्ठंत्यंजनपर्वता ॥ ५ ॥ दशयोजनसहस्रा
तिरिक्तविस्तृतास्तले ॥ सहस्रयोजनाश्चार्द्ध क्षुद्रमेरूच्छ्रयाश्च ते ॥ ६ ॥ तत्र प्राक्
देवरमणो नित्योद्योतश्च दक्षिण ॥ स्वयंप्रभ प्रतीच्यस्तु रमणीय उदक्स्थित ॥७॥
शतयोजनायतानि तदर्धं विस्तृतानि च ॥ द्विसप्ततियोजनोच्चान्यर्हच्चैत्यानि तेषु च ॥
॥ ८ ॥ पृथक् द्वाराणि चत्वार्युच्चानि षोडश योजनी ॥ प्रवेशे योजनान्यष्ट विस्ता
रेप्यष्ट तेषु तु ॥ ९ ॥ तानि देवासुरनागसुपर्णानां दिवौकसा ॥ समाश्रयादेव तेषा
नामनिर्विश्रुतानि च ॥ १० ॥ षोडशयोजनायामा स्तावन्मात्राश्च विस्तृतौ ॥ अष्ट
योजनकोत्सेधास्तन्मध्ये मणिपीठिका ॥ ११ ॥ सर्वरत्नमया देवच्छंदका पीठिकोप
रि ॥ पीठिकान्योऽधिकायामोच्छ्रयनाजस्तु तेषु च ॥ १२ ॥ ऋषभा वर्द्धमाना च त
था चन्द्राननापि च ॥ वारिषेणाचेति नाम्ना पर्यंकासनसस्थिता ॥ १३ ॥ रत्नमय्योयु
ता स्वस्वपरिवारेण हारिणा ॥ शाश्वतार्हत्प्रतिमा प्रत्येकमष्टोत्तर शतं ॥ १४ ॥
द्वे द्वे नागभूतकुंडभृत् प्रतिमे पृथक् पृथक् ॥ प्रतिमाना पृष्ठतस्तु छत्रभृत् प्रतिमैकिका
॥ १५ ॥ तेषु धूपघटीदामघंटाष्टमगलध्वजा ॥ छत्रतोरणचगेर्य पटलान्यास
नानि च ॥ १६ ॥ षोडश पूर्णकलशादीन्यलंकरणानि च ॥ सुवर्णरुचिररजो वालु
कास्तत्र भूमय ॥ १७ ॥ आयतनप्रमाणेन रुचिरा मुखमडपा ॥ प्रेक्षार्थमडपा
अक्षवाटिकामणिपीठिका. ॥ १८ ॥ रम्याश्च स्तूपप्रतिमाश्चैत्यवृक्षाश्च सुंदरा ॥ इ
न्द्रध्वजा पुष्करिण्यो दिव्या संति यथाक्रम ॥ १९ ॥ प्रतिमा षोडश चतुर्द्वारस्तू
पेषु सर्वत ॥ शतं चतुर्विंशमेव ता साष्टशततद्युता ॥ २० ॥ प्रत्येकमजनाद्रीणा
ककुप्सु चतसृष्वपि ॥ गते लक्षे योजनाना निर्मत्स्यस्वच्छवारय ॥ २१ ॥ सहस्र
योजनो द्वेधा विष्कभे लक्षयोजना ॥ पुष्करिण्य सति तासा क्रमान्नामानि षो
डश ॥ २२ ॥ नदिषेणा चाप्यमोघा गोस्तूपाऽथ सुदर्शना ॥ तथा नदोत्तरानदा सु
नदा नदिवर्धना ॥ २३ ॥ भद्रा विशाला कुमुदा पुडरीकिणिका तथा ॥ विजया वै
जयती च जयती चापराजिता ॥ २४ ॥ प्रत्येक योजन पंच पचशत्या परत्र च ॥ यो
जनाना पचशतिं यावद्विस्तारभाजि तु ॥ २५ ॥ लक्षयोजनदीर्घाणि महो
द्यानानि तानि तु ॥ अशोकसप्तच्छदक चूत चपकसज्ञया ॥ २६ ॥ मध्ये पु
ष्करिणीना च स्फटिका पल्यमूर्तय ॥ ललामवो ह्युद्यानादिचिन्हा दधिमुखाद्र
य ॥ २७ ॥ चतुषष्टिसहस्रोच्चा सहस्रं चावगाहिन ॥ सहस्राणि दशा

धस्ताडुपरिष्टाच्च विस्तृताः ॥ २७ ॥ अंतरे पुंष्करिणीनां द्वौ द्वौ रतिकराचलौ ॥ ततो नवंति द्वात्रिंशदेते रतिकराचलाः ॥ २९ ॥ शैलेषु दधिमुखेषु तथा रतिकराद्रिषु ॥ तच्चाश्वतार्हच्चैत्यानि संत्यंजनगिरिष्विव ॥ ३० ॥ चत्वारो द्वीपविदिक्षु तथा रतिकराचलाः ॥ दशयोजनसहस्रायामविष्कंभशालिनः ॥ ३१ ॥ योजनानां सहस्रं तु यावडुच्चयशोभिताः ॥ सर्वरत्नमयादिव्या झल्लर्याकारधारिणः ॥ ३२ ॥ तत्र द्वयो रतिकराचलयोर्दक्षिणस्थयोः ॥ शक्रस्येशानस्य पुनरुत्तरस्थितयोः पृथक् ॥३३॥ अष्टानां महादेवीनां राजधान्योऽष्टदिक्षु ताः ॥ लक्षावाधा लक्षमाना जिनायतनभूषिताः ॥ ३४ ॥ सुजाता सौमनसा चार्चिमाली च प्रभाकरा ॥ पद्मा शिवा तथा शुच्यंजने भूतावतंसिका ॥ ३५ ॥ गोस्तूपासुदर्शने अप्यमलाप्सरसौ तथा ॥ रोहिणी नवमी चाथ रत्ना रत्नोच्चयापि च ॥ ३६ ॥ सर्वरत्नसंचया च सुवसुर्वसुमित्रिका ॥ वसुभागादि च वसुंधरानंदोत्तरे अपि ॥ ३७ ॥ नंदोत्तरकुरुर्देवकुरुः कृष्णा ततोपि च ॥ कृष्णराजी रामरामा रक्षिता प्राक् क्रमादमूः ३८ ॥ सर्वर्द्धयस्तासु देवाः कुर्वते सपरिच्छदाः ॥ चैत्येष्वष्टाह्निकापुण्यतिथिषु श्रीमदर्हतां ॥ ३९ ॥ प्राच्येंऽजनगिरौ शक्रः कुरुतेऽष्टाह्निकोत्सवं ॥ प्रतिमानां शाश्वतीनां चतुर्द्वारि जिनालये ॥४०॥ तस्य चाद्रेश्चतुर्दिक्स्थमहावापीवितर्दिषु ॥ स्फाटिकेषु दधिमुखपरितेषु चतुर्ष्वपि ॥ ४१ ॥ चैत्येष्वर्हत्प्रतिमानां शाश्वतीनां यथाविधि ॥ चत्वारः शक्रदिग्पालाः कुर्वंते ष्टाह्निकोत्सवं ॥४२॥ ईशानेंद्रस्त्वोत्तराहेंऽजनाद्रौ विदधाति तं ॥ तल्लोकपालास्तद्वापी दध्यास्यादिषु कुर्वते ॥ ४३ ॥ चमरेंद्रो दाक्षिणात्येंऽजनाद्रावुत्सवं सृजेत् ॥ तद्वाप्यंतर्दधिमुखेष्वस्य दिग्पतयः पुनः ॥ ४४ ॥ पश्चिमेंऽजनशैलेतु बलींद्रः कुरुते महं ॥ तद्दिग्पालास्तु तद्वाप्यंतर्नाग्दधिमुखाद्रिषु ॥ ४५ ॥ वर्षंदीपदिनारब्धानुपवासान् कुहूतिथौ ॥ कुर्वन्नंदीश्वरोपास्त्यै श्रायसीं श्रियमाश्रयेत् ॥ ४६ ॥ भक्त्या चैत्यानि वंदारुस्तत्स्तोत्रस्तुतिपावनाक् ॥ नंदीश्वरमुपासीनोऽनुपर्वाहस्तरेत्तरां ॥ ४७ ॥ प्रायःपूर्वाचार्यं ग्रथितैरेवायमाचितः श्लोकैः ॥ श्रीनंदीश्वरकल्पो लिखित इति श्रीजिनप्रभाचार्यैः ॥ ४८ ॥ इति श्रीजिनप्रभाचार्यविरचितनंदीश्वरकल्पः समाप्तः ॥

## ॥ अथ श्रीशारदास्तवनप्रारंभः ॥

वाग्देवते भक्तिमतां स्वशक्तिकलापवित्रासितविग्रहा मे ॥ बोधं विशुद्धं भवती विधत्तां कलापवित्रासितविग्रहा मे ॥१॥ अकंप्रवीणाकलहंसपत्राकृतस्मरेणानमतां निहंतुं ॥ अकंप्रवीणा कलहंसपत्रा सरस्वती शश्वदपोहताद्वः ॥ २ ॥ ब्राह्मी विजे

षीष्ट विनिद्रकुदप्रनावदाता घनगर्जितस्य ॥ स्वरेण जैत्री कृतुना स्वकीयप्रना वदाता घनगर्जितस्य ॥ ३ ॥ मुक्ताक्षमालालसदौषधीशाऽनिशूज्वला नाति करे त्वदीये ॥ मुक्ताक्षमाला लसदौपधीशा या प्रेक्ष्य नेजे मुनयोपि हर्ष ॥ ४ ॥ ज्ञान प्रदातु प्रवणा ममातिशया लुनाना नवपातकानि ॥ त्व नेमुषा नारति पुंडरीक शयालुनानानवपातकानि ॥ ५ ॥ प्रौढप्रनावा समपुस्तके न ध्याता सि येनांबि विराजिहस्ता ॥ प्रौढप्रनावा समपुस्तकेन विद्या सुधापूरमदूरड खा ॥ ६ ॥ तुन्य प्रणाम क्रियते नयेन मरालयेन प्रमदेन मात ॥ कीर्तिप्रतापौ नुवि तस्य नम्रमरालयेन प्रमदेन मात ॥ ७ ॥ रुच्यारविंदन्रमद करोति वेल यदीयोर्चति तेऽन्ह्वियुग्म ॥ रुच्या रवि दन्रमद करोति स स्वस्य गोष्ठी विडुषा प्रविश्य॥ ८ ॥ पादप्रसादात्तव रूपसपत् लेखाजिरामोदितमानवेश ॥ नवेन्नर सूक्तिनिरब चित्रोल्लेखानिरासीदितमानवेश ॥ ९ ॥ सिताशुका ते नयनानिरामा मूर्ति समाराध्य नवेन्मनुष्य ॥ सिताशुकाते नयनानिरामाधकारसूर्ये क्षितिपावतंस ॥ १० ॥ येन स्थितं त्वामनु सर्वतीर्थ्ये सनाजिता मानतमस्तकेन ॥ डुर्वादिना निर्दलित नरेंड्रसनाजितामानतमस्तकेन ॥ ११ ॥ सर्वज्ञ वक्त्रवरतामरसाकलीनामाली प्रती प्रणयमथरया दृशैव ॥ सर्वज्ञवक्त्रवरतामरसाकलीना प्रीणातु विश्रुतयशा श्रुतदेवता न ॥ १२ ॥ कृतस्तुतिर्निर्विडनक्तिजमत्वष्टकैर्गुफैर्गिरामिति गिरामधिदेवता सा॥ बालोऽनुकम्प्य इति रोपयतु प्रसादस्मेरा दृश मयि जिनप्रनसूरिवर्ण्या ॥ १३ ॥ इति श्रीजिनप्रनसूरिकृतश्रीशारदास्तवनं समाप्तम् ॥

## ॥ अथ श्रीजिनसिंहसूरिस्तवनप्रारंन ॥

प्रनु प्रदद्यान्मुनिपङ्क्तिपक्तेर्नागारिरागोपचितिं सदान ॥ समुद्वहन् श्रीजिनसिंहसूरिर्नागारिरागोपचिति सदा न ॥ १ ॥ कल्याण गोत्रायितमोहरेणा चमानिलेन स्थिरतागुणेन ॥ कल्याणगोत्रायि तमोहरेणान्नत्य त्वयैवार्हतशासनस्य॥ २ ॥ स्वामिन् मनोन्वेति न ते मृगाक्षी मनोजवाना चतुरगमाना ॥ बोधेन रुद्धीने कुजं गजाना मनोजवाना च तुरगमाना ॥ ३ ॥ कदर्पकातारविनावसूना प्राप्ते त्वयीशान्यमृपि तप श्री ॥ कदर्पकातारविनावसूनां निधिर्गुणाना नुवि यस्त्वमेव ॥ ४ ॥ जगज्जनानोजवने गुणौघवक्रारविंद नविना कृतोह ॥ वंदे त्वदीय सकलोरुपस्य वक्रारविंद नविनाऽकृतोह ॥५॥ सर्व कपायानलमेघवारिमोहाय सूक्त शृणु त विजेतु ॥ सर्वे कपायानलमेघवारिवृत्त स्मर श्रीजिनसिंहसूरे ॥ ६ ॥ मुदे न कस्यास्तु धुरि स्थि

ता ते सरस्वती कुड्वशीकराणां ॥ माधुर्यशैत्याङ्गयिनी तरङ्गिणी सरस्वती कुड्वशीक
राणां ॥ ७ ॥ सदोदिताबोधमपूरुषा अप्यानंदितावागमृतं अवोन्यां ॥ सदोदिताबो
धमपूरुषा अप्युपाशमंस्तेन मुनीशु तेषां ॥ ७ ॥ व्यामोहबाणासुरदर्पमाथ पद्मावरो
दीर्णतमोवितानः ॥ त्वमेधि सन्मंत्रजपानिराद्ध पद्मावरो दीर्णतमोवितानः ॥ ए ॥
योगेन धीरोचित माननीय श्रियस्तवोच्चे शशिनोपमानं ॥ योगेनधीरोचित माननीय
प्रख्यातमूर्खं तमुदाहरामः ॥ १० ॥ स्मराशुगानां हृदि मेंगिममर्माविधामरेशास्त्र निधेहि
तानि ॥ तत्वानि सूरींड् मदांन्हिनेदविधाऽमरेशाऽस्त्रनिधे हितानि ॥ ११ ॥ जिनप्र
नाचार्यमनासमानावबोधमव्याः कविमात्मशिष्यं ॥ जिनप्रना चार्यमनासमाना प्र
नो स्फुरत्वस्य तव प्रसादात् ॥ १२ ॥ श्रीमज्जिनेश्वरयतीश्वरपादपद्मशृंगारनृंगकरणि
र्जिनसिंहसूरिः ॥ इत्थं स्तुतोस्तु यमकैः शमकैरवेंडुरानंदकंदलनडुर्ललितो नतानां
॥ १३ ॥ इति श्रीजिनप्रनसूरिकृतयमकस्तवकितश्रीजिनसिंहसूरिस्तवनं समाप्तं ॥

## ॥ अथ श्रीपंचनमस्कृतिस्तवनप्रारंनः ॥

प्रतिष्ठितं तमः पारे पारेवाग्वर्त्तिवैनवं ॥ प्रपंचं वेदसः पंच नमस्कारमनिष्टुमः
॥ १ ॥ अहो पंचनमस्कारः कोप्युदारो जगत्सु यः ॥ संपदोऽष्टौ स्वयं धत्ते दत्तेऽनंता
स्तु ताः सतां ॥ २ ॥ दत्तेऽनुकूलएवान्यो नुक्तिमात्रमपि प्रनुः ॥ एष पंच नमस्कारः प्रा
तिलोम्येपि मुक्तिदः ॥ ३ ॥ नमस्कारनरेंद्रस्य किमपि प्राज्ञवं स्तुमः ॥ यदीयकृत्कृतेना
पि विड्वंति द्विषः क्षणात् ॥ ४ ॥ सिद्धयोप्यणिमाद्यास्ता नमस्कारमधिष्ठिताः ॥
अष्टापदग्रकुरात्मापि यदसौ प्रणवेऽविशत् ॥ ५ ॥ शिरःकादिधियाधीरैः स्वांगदेशनि
वेशिता ॥ नमस्कृतेर्नवपदी कटरे वज्रपंजरः ॥ ६ ॥ वर्ण्यतां श्रीनमस्कारान् कार्मणं
किमतोधिकं ॥ यत्संप्रयोगतःपांशुरपि संवनयेज्जगत् ॥ ७ ॥ नमस्कारं नुमः सिद्ध
यत्पदस्पर्शपूतया ॥ पद्याह्लादितसर्वांगः शांतिमासादयेऽऽवरी ॥ ७ ॥ नववर्णी नम
स्कृत्याः कृती प्रतिपदं जपन् ॥ विधत्ते विविधानिघ्नविघ्नावग्रहनिग्रहं ॥ ए ॥ कर्णिका
ष्टदलाढ्ये हृत्पुंडरीके निवेश्य यः ॥ ध्यायेत्पंच नमस्कारं संसारं स तरेत्तरां ॥ १० ॥ अष्टौ
कोष्टे पदेष्वस्य वर्णानालिख्य तावतः ॥ कुड्यादावर्चयन् सम्यगेति शांतेर्निशांततां
॥ ११ ॥ आद्याक्षराण्यपीष्टार्थसिध्यै स्युः परमेष्ठिनां ॥ बिंडुरप्यामृतः किं न नाशयेद्विषवि
क्रियां ॥ १२ ॥ करांगुलीषु विन्यस्यार्हदादीन् ध्यानमानयन् ॥ प्रत्यूहपन्नगव्यूहव्यपोहे
वैनतेयति ॥ १३ ॥ गुरून् पंच क्रमात् ध्यायन् मुद्रया परमेष्ठिनां ॥ गूढप्ररूढ मचिरात्
कर्मग्रंथिं विमोचयेत् ॥ १४ ॥ षोडशाक्षरगान् अद्धापरमः परमेष्ठिनः ॥ प्राणी प्रणि

दधानोप्यैौपवस्तुफलमेधते ॥ १५ ॥ विद्युज्जलाग्निनृपालव्यालचौरारिमारिज ॥
नय वचयते पच नमस्कारम्य सस्मरन् ॥ १६ ॥ आराध्य विधिवत्पंच नमस्कारमु
दारधी ॥ लक्षजापेन पापेन मुक्तमार्हत्यमश्नुते ॥ १७ ॥ ऐहिकं फलमीप्सनामष्ट
कर्मप्रसाधिनी ॥ मुक्त्यर्थिना च स्यादेषैवाष्टकर्मनिपेधिनी ॥ १८ ॥ विपदामनि
चारस्योपादानस्याखिलश्रिया ॥ स्मर्ता नमस्कृते स्वर्गिवर्गेण वरिवस्यते ॥ १९ ॥
चतुर्दशाना पूर्वाणामेषैवोपनिषत्परा ॥ आद्या सकलविद्यानां बीजाना प्रकृति
परा ॥ २० ॥ इयं पथ्योदन पथ्य परलोकाध्वयायिना ॥ परमास्त्र नृणा मोहराज
युद्धाय सज्जतां ॥ २१ ॥ प्राणी प्राणप्रयाणस्य क्षणे ध्यायन्नमस्क्रियां ॥ लभते सु
गति नैकान् पाप्मन कृतपूर्व्यपि ॥ २२ ॥ नमस्कृतिं कृपावित्तै श्रोत्रयो प्राभृती
कृतां ॥ स्वीकृत्य पुण्यसभ्यंचस्तिर्यचोपि ययुर्दिव ॥ २३ ॥ त्रिदडिन निगृह्याऽसिय
ष्टिना श्रेष्ठिनंदन ॥ नमस्कारस्य महसाऽसाधय त्स्वर्णपूरुषं ॥ २४ ॥ स्मृत्वा पच
नमस्कार प्रविष्टायास्तमोगृह ॥ घटन्यस्तो महासत्या पन्नग पुष्पमाल्यभूत् ॥२५॥
नमस्कारेण संबोध्य मातुलिंगवनामर ॥ प्राणत्राण स्वपरयोर्व्यधत्त श्राद्धपुगव ॥
२६ ॥ यद्धता हुंडिक प्रापत् सुकुल चडपिगल ॥ इतस्तादृक् गुणस्फीति सुदर्श
न सुदर्शने ॥ २७ ॥ एष माता पिता स्वामी गुरुर्नेत्रं भिषक् सखा ॥ प्राणत्राण
गतिर्दीप शाति पुष्टिर्महन्मह ॥ २८ ॥ निधय संनिधो कामधेनुरप्यनुगामिका ॥
भूभृतो भृतकास्तस्य यस्य नेप हृदो हिरुक् ॥२९॥ नास्येयत्ता प्रभावाणा क्रमवर्ति
तया गिरा ॥ मितायुष्प्राज्ञ सर्वोपि न्यक्षेण भणितु क्षम ॥ ३० ॥ सर्वावस्थोचित
सर्वश्रुतसार सनातन ॥ परमेष्ठिमहामत्रं भक्तितन्नमुपास्महे ॥ ३१ ॥ वज्रैर्योजन
लक्षमानविदितो बिभ्रत्सुवर्णात्मता भव्यानदननन्दशालमहिमा रोचिष्णुचूलाचि
त ॥ अस्तु श्रीजिनगेहभास्वररुचिस्थान लसन्निर्जर सोय व परमेष्ठिपचकनम
स्कार सुमेरु श्रिये ॥ ३२ ॥ साम्नायावयवा जिनप्रभगुरुर्या स्त्रयामासिवान् दि
व्या पचनमस्कृतिस्तुतिमिमामानदनंदन्मना ॥ यस्यैषाचति कण्ठसीमनि सदा मुक्ता
लताविभ्रम त मुचत्यचिरेण विघ्ननिचया श्लिष्यंति च श्रीभरा ॥ ३३ ॥ इति
श्रीपचनमस्कृतिस्तवन समासम् ॥

## ॥ अथ श्रीवीरस्तवनप्रारभ ॥

श्रीवर्द्धमान परिपूरितभव्यकाम चामीकरप्रभ जिनप्रभसूरिरेतं ॥ सोसूत्र्यते त
व जगज्जनहर्षवर्षदीपोत्सवस्तवलव यमकावदातं ॥ १ ॥ श्रितास्त्वा कमलाह

र्य कल्पपाद पयोज ये ॥ करौ तान् प्रति विश्वैककल्पपादपयोजये ॥ २ ॥ क स्ते नार्ति न सद्बोधसिंधुरारातिलक्ष्मणे ॥ रंके च तुल्यचित्ताय सिंधुरारातिलक्ष्मणे ॥ ३ ॥ द्दिलेश देहं दर्शे त्वां शिवशंकार्त्तिके विदः ॥ नान्यतीर्थ्या यत्र लुप्ता शिवशंका र्त्तिकेविदः ॥ ४ ॥ रुद्धान्यपवर्णानामादानं दीपालिका सतां ॥ कोटिं परां यत्र तेऽनू दानंदी पालिका सतां ॥ ५ ॥ कुदृशां शुश्रुवे तेंऽल्पदेशनाशितदर्पका ॥ धन्यैरेवेश वैरा ग्यदेशनाशितदर्पका ॥ ६ ॥ त्वन्मुक्त्याऽसीत्तमो हंतुं तरसा दक् पावनी ॥ पूः पापा पापपद्माऽल्पेतरसादक्पाऽवनी ॥ ७ ॥ त्वत्सेवायां हृषीकेभहस्तिपाऽलस्यहीनता ॥ कैर्न नाम तदा राज्ञो हस्तिपालस्य हीनता ॥ ८ ॥ दधानाऽघोरगेभूकस्वातिरेकाविराज तां ॥ रुक्षेषु जात त्वन्मोक्षो स्वातिरेका विराजतां ॥ ९ ॥ त्वन्निर्याणेन करणं ना गसंक्रमरंजयत् ॥ एनांसि भगवन् कं ना नागसंक्रमरंजयत् ॥ १० ॥ मूर्छागत स्येंद्रियार्थममता विषपानतः ॥ नाथोपचर्यां कुर्यास्त्वं मम ताविषपानतः ॥ ११ ॥ तावकं या पिबत्युच्चै रमायाननसारसं ॥ दृष्टिर्विंदति सोरस्य रमाया न न सारसं ॥ १२ ॥ स्तूयासमन्वहमहं भवतः पृथिव्यां सिद्धार्थनंदनयशोभिमतं समस्याः ॥ सिद्धार्थनंदनयशोभि मतं समस्याः सर्वश्रियां जिन निजं हृदि रोप्यतां मे ॥ १३ ॥ इतिश्री जिनप्रभसूरिविरचितश्रीवीरस्तवनं समाप्तम् ॥

## ॥ अथ श्रीआदिजिनादिस्तवनप्रारंभः ॥

प्रणम्यादिजिनं प्राणी मरुदेवांगजायते ॥ हरणे पापरेणूनां मरुदेवांग जायते ॥ १ ॥ गर्वमैंदवमब्जावमाननस्यप्रभोरुणः ॥ सौंदर्येणाजितस्यैर माननस्य प्रभोरु णः ॥ २ ॥ मोहस्यानापतंस्त्राणं शंभवेश मिता रये ॥ यस्मै विश्वं नमश्चक्रे शं भवे शमितारये ॥ ३ ॥ मुदेऽभिनंदनः सूतो राजसंवरदेहतः ॥ यत्पादाब्जे नृणां भावं राजसं वरदे हतः ॥ ४ ॥ दुःस्थानां सुमते दौस्थ्यं साध्वसागदवालनं ॥ ध्यायंस्त्वां च स नीरोगः साध्वसागद वालनं ॥ ५ ॥ कः पद्मप्रभ शक्तीस्ते प्रभावद मिता हिताः ॥ संख्यातुमीष्टे चंद्रार्कप्रभावदमिता हि ताः ॥ ६ ॥ मोहराजं सुपार्श्व त्वं नुतमायामलोलुपः ॥ भक्तौ तेऽतः कोस्तु विद्वानुतमायामलोलुपः ॥ ७ ॥ तव चंद्रप्रभोत्पन्नमहसे नक्षमेनतः ॥ न सेवाविरहं सोढुं महसेनक्षमे नतः ॥ ८ ॥ मयि बिभ्रत्तनुं चंद्रभावलक्ष्प्रभोदयां ॥ तन्यास्त्वं सुविधे सर्वभावलक्ष प्रभो दयां ॥ ९ ॥ शीतलांशुं श्रियोधाम्ना रविकल्पमनामयाः ॥ त्वां प्रत्यात्मा कृतो भर्तरवि कल्पमना मया ॥ १० ॥ त्वन्मते रमते श्रेयन् कमलायतनेत्र या ॥ सा धीप्रिया मेऽस्तु कृतं कमलायतनेत्रया ॥ ११ ॥ वासुपूज्य सविज्ञास्त बंधूकारुण्ययोगतः ॥

शरण त्वक्रमौ विश्ववंद्यकारुण्ययोगत ॥ १२ ॥ श्रेयस शरण नव्य त्व गच्छ विमजंरुते ॥ त्वदि देहि च नत्याद्विकृत्व गच्छविमलंकृते ॥ १३ ॥ य ख्यातस्त्रि जगत्यार्य सदानुननयोऽनिश ॥ हृत्वर्कवन्मोहमयी सदानुतनयोनिश ॥ १४ ॥ त्वत्पादाब्जेऽलिनो हर्षाद मल पटता पद ॥ शाते मोह जित मन्ये दमलपटता पद ॥ १५ ॥ सुश्रीकुंथु प्रतिप्रव्हा यमलार्जन नजना ॥ यास्तावीड्रागरोपयम लार्जननजना ॥ १६ ॥ सोढुं समर्था नूयस्य नतमामवनिर्वल ॥ सोरत्वमर्हंच्च क्रीड्नत मामव निर्वल ॥ १७ ॥ शक्ति नवाब्धेरुध्दर्तु मतिमल्लीनदेहिन ॥ पुण्य धातर्जने नक्तिमेतिमल्लीन देहि न ॥ १८ ॥ यस्या विलासास्त्रैलोक्य पद्मानदनना नव ॥ मा तु सुव्रत सा शक्या पद्मानदनना न व ॥ १९ ॥ यत्र नान्हिद्वयी ते वा न मे रुचिरकोमला ॥ तत्र राजेप्यनीताना नमेरुचिरकोमला ॥ २० ॥ नेमे नमस्ते दोषक्ष रजन प्रनविभ्रवे ॥ कर्मासुरवधायोच्चैरजनप्रनविभ्रवे ॥ २१ ॥ तापाग्नो जुहुवे पार्श्व नवता पचसायक ॥ श्रितोऽतस्त्व जनो मोहनवताप च सायक ॥ २२ ॥ नाऽलुन्य कामसंख्याय लोकनेतरणीयसा ॥ तेन वीर जगत्कर्मालोकने त रणीयसे ॥ २३ ॥ तवार्हन् पचकल्याणी दया लोकामदायिन ॥ पायास्त्रिजगते दत्तो दयालो कामदर्पिन ॥ २४ ॥ त्रातु जीववीथा सविदक्षा मानव तामिता ॥ जिने शा पातु करुत्वं दक्षा मानवतामिता ॥ २५ ॥ यदाराध्यति गीर्वाणव्रजाऽनयदशासन ॥ तत् प्रज्ञा शरण नक्ता व्रजान्नयदशासन ॥ २६ ॥ यस्या नेशगिरा जैन्या सुत रामघवासना ॥ हंत्वापद सुसंयम्यासुतरा मघवासना ॥ २७ ॥ लक्ष्म्यारुष्टिकर जिनेद्र मनघं नद्रावलीमदिर वदे तस्य गिर नतभ्रमतम सूर्य धिया कारण ॥ सार्वीयंप्रथित प्रनावमखिलारिष्टौघहानिप्रद दनव्यालसृणि वरेण्यसमय रगज्जुण बोधिद ॥ २८ ॥ इति श्रीयमकयुक्त आदिजिनादिस्तवन सपूर्णम् ॥

## ॥ अथ श्रीपार्श्वप्रातिहार्यस्तवनप्रारम्भ ॥

त्वा विनुत्य महिमश्रियामह पन्नगाकमठदर्पकोपिण ॥ स्वा पुनामि किमपीनर क्षितापन्नगा कमठदर्पकोपिण ॥ १ ॥ कोनुरज्यति देशनोकसि ड्रागशोकतरुणा वि नासिते ॥ रत्नहेमरुचिनि क्षितोह्लसड्रागशोकतरुणाविनासिते ॥ २ ॥ देहदीप्ति तिरस्कृतो दयत्सारना सुमनस सदानवा ॥ देशना नुवि किरति ते स्फुरत्सारना सुमनस सदानवा ॥ ३ ॥ तादृश श्रवणतस्तवोत्तमा कारकाय वरदेशनाध्वने ॥ प्रस्थित कइव पाप्मना निराकारकायवरदेशनाध्वने ॥ ४ ॥ नाकिनायकयुगेन सादर चामरैर्विपदनाग वीज्यसे ॥ त्व न कैर्नवसुखायमुक्तये चामरैर्विपदनागवीज्यसे ॥ ५ ॥

वीक्षितुर्नयनयोर्निराकृता शंसनासुरमणीपनावतः ॥ आतनोति कृतसिंहविष्टरं शंस नासुर मणीपनावतः ॥ ६ ॥ इष्टुरर्पयति कीर्त्तिशुभ्रिता शांतभावलयमर्यमोहदं ॥ दीप्यमानमनुमौलि तावकं शांतभावलयमर्यमोहदं ॥ ७ ॥ व्योम्नि गर्जि निनदः पु रस्तवामानवैरिमुदिरो महर्षिभिः ॥ कैर्न डुंडुभिरवः श्रुतस्तनौ मानवैरिमुदि रोमहर्षि भिः ॥ ८ ॥ द्रोमुखीषु कुपथानि मौक्तिकन्यास हृद्यरुचितानि चायितुः ॥ त्रीणि ते जिन शितोभवारणं न्यासहृद्यरुचितानिचायितु. ॥ ९ ॥ प्रातिहार्यमहिमालयस्तवः श्रीजिनप्रभ विति स्तुतो मया ॥ पार्श्वकामितफलाय कल्पतां कल्पपादप इवेष नेमुषां ॥ १० ॥ इति जिनप्रभसूरिकृतश्रीपार्श्वप्रातिहार्यस्तवनं संपूर्णम् ॥

## ॥ अथ श्रीकल्याणपंचकस्तवनप्रारंभः ॥

निलिंपलोकायित भूतलं श्रिया नयन्मुदं नैरयिकानपि क्षणं ॥ त्रिलोकलोकस्य रतेः प्रपंचकं जिनेंद्र कल्याणकपंचकं स्तुमः ॥ १ ॥ निवेदितः प्रीतिपरैः पुरंदरैश्चतुर्द श स्वप्नविभावितोदयः ॥ महानिधानागम चारुरर्हतां तनोतु गर्भावतरोत्सवः शिवं ॥ २ ॥ कुकुप्कुमारीकृतसूतिसंस्क्रियं सुपर्वसंपादितमज्जनक्षणं ॥ सृजंतमुद्योतम यं जगत्रयं जनुर्महं संस्तुमहे भवद्रुहं ॥३॥ सुरोपनीतैः परिवत्सरं धनैर्यथाभिला षं परितोषितार्थिने ॥ जिनाधिपानां निखिलांगिरक्षिणे नमस्तपः तिपत्तिपर्वणे ॥ ४ ॥ अमर्त्यनिर्वर्त्तितदेशनाऽवनीकृताद्भुतः कैवलवैभवोद्भवः ॥ मंदनांदीरवपू रितांबरः करोतु जैनः शुभभाजनं जनं ॥ ५ ॥ पुरंदरक्रंदितसंभ्रमभ्रमत्सुरौघमालिं गितमुक्तिवल्लभं ॥ जिनस्य निर्वाणदिनं दिगंतरस्फुरत्तमः सत्तमशर्मणेऽस्तु नः ॥ ६ महर्षयो भूतनवभविष्यतामसुत्र कल्याणकपंचकेऽर्हतां ॥ विना विदेहान् दश कर्मभू मिषु स्मरंति मासर्क्षतिथीन् सनातनान् ॥ ७ ॥ इत्याहतस्त्रिभुवनप्रभुसत्क पंचक ल्याणवज्रकवचं हृदि यो बिभर्त्ति ॥ शस्त्राणि ते जिततराण्यपि मोहराजः सौभाग्य भाग्ययुजि न प्रभवंति तस्मिन् ॥ ८ ॥ इति श्रीकल्याणपंचकस्तवनं समाप्तम् ॥

## ॥ अथ लक्षणप्रयोगमयश्रीवीरस्तवनप्रारंभः ॥

निस्तीर्णविस्तीर्णभवार्णवं झैरुत्कर्णमाकर्णितवर्णवादं ॥ सुपर्णमंहोहि दमे सु पर्ण श्रीपर्णवर्णं विनुवामि वीरं ॥१॥ यैर्व्याप्यतां प्राप्यत तावकीनं क्रमांबुजं नाथ नमस्करोतेः ॥ संसारचक्रभ्रमणाभिधस्य गणस्य ते वृत्करणं गृणंति ॥२॥ तुल्येपि ने त्रामृतवर्षिभावे कलंकपंकच्युतिसंयुतिभ्यां ॥ प्रधानशिष्टं वदनं त्वदीयं मन्यामहे ऽन्वाचयशिष्टमिंडु ॥ ३ ॥ द्विगोरिव त्वत्प्रणतस्य संख्या पूर्वा प्रवृत्तिर्न कुतीर्थिका

नां ॥ विज्ञो बहुव्रीहिसमासवत्त्वमन्यार्थ एवोपदधासि वृत्ति ॥ ४ ॥ विज्ञक्तिमुक्तं पुरु पैरसंख्यै समाश्रितं धातुविकारहीनं ॥ अपूर्वमेतत्कटकृत्यनिष्ठाप्रधानमाख्यात मिन त्वदीय ॥ ५ ॥ यस्मिन्न सधिर्न च वर्णलोपो न सस्तुतिर्विग्रहकारकाणा ॥ नवा विकल्प क्वचन प्रयोगेष्वहो नव व्याकरण तवेद ॥ ६ ॥ ध्यात्वा हृदा त्वा फ लमेति जव्यो दृष्टापि साक्षान्न कृतीत्वजव्य ॥ तत्सत्यमेतद्बहिरगतो यत् स्यादतर गोत्रविधिर्बलीयान् ॥ ७ ॥ एतावतैव प्रतिजानाति विश्वविलक्षण वीर जवच्चरित्रं ॥ जालेन युष्मत्पदसप्रयोगेष्यलंजि लोकस्य यडुत्तमत्व ॥ ८ ॥ एकत्र धातावुपस र्गपचकप्रयोग इष्ट. कविजिर्निरतर ॥ त्वद्ध्यानधातावुपसर्गविशति सुर प्रयोक्ता न कथं कुलक्षण ॥ ९ ॥ प्रजो मद्दचित्रमिदं कदबके कुतीर्थिकाणामपि कर्म धारये॥ यन्मोहराजप्रथनेषु पुवद्भावो न कश्चित् परिपोस्फुरीति ॥१०॥ शुद्धयोर्वरद जावकर्म णोर्दर्शयन् विकरणस्थितिं पदे॥निर्विजक्ति समुदाहरन् पद साधुलक्षणविचक्षणो ज वान्॥११॥अनुपघातिनमेव किलागम प्रणिगदति जिनेश्वर शाब्दिका ॥असुमतामुपघा तरेर स्पृशत् कथमिवागमता स कृत परै ॥१२॥योपादानं नश्यत पापपूगम्यासि व्या प्यं वदतेर्वासवाना॥आधार श्रीसंपदा सप्रदानं त्रैलोक्यस्य स्तोत्ररत्नोपदाया ॥१३॥ बेडावस्थ [illegible] सुशतां मोहवार्धि तरीतु कर्ता जातेर्द्विरदरदनच्छेदशोनिर्यशोजि ॥ जव्यानां यस्त्वमसि सुपथप्रस्थितो हेतुकर्ता तस्मै तुन्यं जिन मम शिरो नम्रताकम्रम स्तु ॥ १४ ॥ अंतस्थास्तव शासनस्य यशसा कुदावदातत्विषां गच्छते ज्जुवि सप्र सारणविधौ मर्त्या न तत्कौतुक ॥ यत्ते नित्यमनामिनोपि कुगुरौ डुर्वृत्तदेवेषु च प्रा जते गुणवृद्धिजाजनतया ब्रूमस्तदत्यद्भुतं ॥ १५ ॥ तात त्रातरिद नपुसकमपि स्वांत मदीयं जवन्माहात्म्यस्तुतिसुंदरीं प्रणयत पाणौ करोत्वेकदा ॥ तत्सश्लेपसुखानु जाववशत क्लैब्य विधूय क्षणात् तत्रोत्पादयिता ऽथ शाश्वतचिदानदाव्हय नदन ॥ १६ ॥ इत्थंकारमिजारि लक्षणनर सल्लक्षणप्रक्रियाचित्रं स्तोत्रमिद विदन्हृदयो जिव्हाग्रजाग्रत्तम ॥ कुर्वाण स्मरबाणकुण्ठनकलानिष्णाततानर्तकी नाट्याचार्य जिनप्रजेंद्र पदवीसाम्राज्यमासादयेत् ॥ १७ ॥ इति श्रीजिनप्रज विरचितलक्षणप्र योगमयश्रीवीरस्तवन समाप्तम् ॥

## ॥ अथ श्रीवीतरागस्तवनप्रारंज ॥

जयति पादा जिननायकस्य दोपापहा ध्वस्ततमोविकारा ॥ रवेरिवाश्चर्यमतापका श्च न कौशिकक्लेशकरा खराश्च ॥ १ ॥ वाग्ज्ञानपूजानिरपायरूपाश्चत्वार एतेऽतिशया स्तवैव ॥ देवाधिदेवत्वमनिष्टवतश्चतु कषायक्षतये तु नाथ ॥ २ ॥ शुद्धप्रयोगस्तवसं

स्तयेन कृतार्थतामेति कृती कृतीश ॥ न वाच्यतां याति कदापि लोके यथा यथार्थस्तव काव्यकर्ता ॥ ३ ॥ त्वमेव चेच्चेतसि जागरूको जंतोरसि श्रीजिनराजमल्लः ॥ नवेन्न किं सत्रिजगन्महल्लः प्रपात्यते किं नहि मोहमल्लः ॥४॥ त्वमेव देवस्त्रिविधेन येषां जगत्रयीवंद्यपदो हि पादैः ॥ धात्री पवित्रीक्रियते किमत्रचित्रं तदीयैस्त्रिजगत्पवित्रैः ॥ ५ ॥ उपाधियोगान्महतो लघुत्वं लघोरपि प्राज्यगुरुत्वमेव ॥आदर्शके देव यथा द्विपस्य प्रदीपदीप्तौ तु तनूकृतःस्यात् ॥६॥ कश्चिद्गुणानां हि लवोपि लोके यो दृश्यते सोपि विभोः प्रभावः ॥ अद्भुतकल्याणनिधेर्जिनेंद्र पयोविना पल्लविता नवृक्षः ॥ ७ ॥ नातःपरं देव जडत्वमंतः प्रत्यक्षलक्षोपि भवान्नबुद्धः ॥ सर्वज्ञताप्यस्ति विभो न चान्या त्वमेव देवो विदितो यदीह ॥ ८ ॥ विदंति सर्वेप्यपरानधीशान् नतान्नतास्ते प्रवदंति सर्वान् ॥ जगज्जगन्नाथ यथास्थितं हि त्वं वेत्सिहि त्वांतु न वेत्ति चित्रं ॥ ९ ॥ बहिःस्थितं वेत्ति परस्वरूपं न स्वस्थितं देव तव स्वरूपं ॥ चक्षुर्यथा पश्यति बाह्यरूपं नचात्मरूपं तु कदापि लोके ॥ १० ॥ सदात्मविज्ञानविहीनधीभिर्न ज्ञायते नाथ विभोः स्वरूपं ॥ स्वशीर्षपश्चात्प्रविभागसम्यङ्निरीक्षणे कोपि न बाह्यहेतुः ॥ ११ ॥ मध्यस्थभावोपि जिन त्वयीह गुणक्षतेः स्याद्गुणिनो नितांतं ॥ यथाऽगुणप्रत्यय एधधातोः कर्मण्यथो कोऽत्र विचारहेतुः ॥ १२ ॥ त्वद्भक्तिभावोप्ययथार्थ एव भवत्प्रणीतार्थविपर्ययेण ॥ विधीयते सर्वहितोपसर्गवर्गेण धात्वर्थइवान्यथा हि ॥ १३ ॥ दोदूयते यःस्वयमेव रागद्वेषादिलुंटाकभटैर्यथेष्टं ॥ संस्तूयते सोपि हि देवबुध्या हहा महामोहविजृंभितं तत् ॥ १४ ॥ अचिंत्यमाहात्म्यनिधिं प्रसन्नं जगच्छरण्यं जगतोपि पूज्यं ॥ त्वमेव देव प्रविवेत्सि हि त्वां प्रकाशतेऽन्येन किमु प्रदीपः ॥ १५ ॥ किमस्तिनास्तिति विवेकपक्षा रागादिपक्षक्षतिलब्धदक्षाः ॥ ये श्रीजगन्नाथ जिनप्रभस्ते त्वामेव देवं जिनमाश्रयंति ॥ १६ ॥ इति श्रीवीतरागस्तवनं समाप्तम् ॥

## ॥ अथ श्रीचंद्रप्रभस्वामिस्तवनप्रारंभः ॥

देवैर्यःस्तुष्टुवे तुष्टैः सोमलांछितविग्रहः ॥ दद्याच्चंद्रप्रभःप्रीतिं सोमलांछितविग्रहः ॥ १ ॥ येषां पूजाविधिःकर्मांजनहृत्कमलालयः ॥ ते जिनाः पांतु वोभव्यजनहृत् कमलालयः ॥ २ ॥ कुतीर्थिसार्थेन डुरासदं भोज्ञानिरंजनं ॥ श्रुतं सेवेत मोहाग्निसदंभो ज्ञानिरंजनं ॥३॥ पातु गीर्वाःकृताविद्योपरमा कमलासना ॥ यत् प्रभो वा जनैर्लेभे परमा कमलासना ॥ ४ ॥ इति श्रीचंद्रप्रभस्वामिस्तवनं समाप्तम् ॥

## ॥ अथ श्रीऋषभदेवस्तवनप्रारंभ. ॥

### संस्कृतभाषा

निरवधिरुचिरज्ञान दोषत्रयविजयिन सता ध्येयम् ॥ जगदवबोधनिबंधनमादि जिनेंद् नवीमि मुदा ॥ १ ॥ कस्तवमिति द्विपोलं वदितु परितो गुणान् गुरुनिभो पि ॥ चुलुकै प्रमिमासति वा कश्व जल वरमनीरनिधे ॥ २ ॥ तदपि त्वद्भक्तिभर प्रतरलितो वच्मि तावकगुणाणुं ॥ चापलनुन्नो स्फुटमपि लपन् शिशुर्वा निरपवाद ॥ ३ ॥ ज्ञानप्रदीपजमिव स्निग्धाजनमुपहित चरणलक्ष्म्या ॥ सध्धानदृगंजिताय चिकुरचयस्ते स यो रुरुचे ॥ ४ ॥

### प्राकृतभाषा

तमकसिए सप्पखयमो,र मोरज्झाहुते किलिम्मति ॥ तुह सासणापिधं जे कुणति विविहे तव किलेसो ॥ ५ ॥ तझिय कल्लाणसिरि, पिदे वकल्लाएसिरिविलासगिह ॥ तुह वदे देहमह विलसिरमोहपि हयमोह ॥ ६ ॥ युग्म ॥ तुह मुहरभासयला, रविदलच्छी मरट्टफुसएोण ॥ ज विजितु हिमरस्सी नियकती निवहसुहडेहि ॥ ७ ॥ असइ तमभि भवभर सुसिरिं पहू ससकोसो ॥ डुग खुर इय घणपरि,हिदंभर्ड परनिसेहहा ॥ ८ ॥

### मागधी भाषा

तुह शुस्तिदेवभाव, स्त गदपञ्ञे शमयपथमचञ्ञे ॥ ते यिए कुमदलश्कशव,शिमिश्चादिस्टी पददि भवे ॥ ९ ॥ तमवय्यवय्यिदमिध, आचिरिकिद शुस्टु मोस्कपुलग्ग ॥ काला चिट्टामि हगे, हलिशभले पिस्किड धञ्ञे ॥ १० ॥ केलीहलाहगुए हलिञ्जकशवस्टलायि किलणाह ॥ तुह अपुलभवत्तिलस, वदामु हगे शर्व ॥ ११ ॥ सयणिदधञ्ञकमले, ये पष्कालिदमहंदपकमले ॥ धिदपलमहिययडु भव शे शदा कोहे ॥ १२ ॥ ॥ कृपा२

### पैशाची भाषा

विबुधान राचित्रानत, अनञ्ञ सामञ्ञ बुञ्ञ तिसपञ्ञं ॥ रतून हितत्थं सदा॥२॥ च्छीकुतुबिनी पनय ॥ १३ ॥ भत्तिभराती दूरे चिट्ठति यो तुह रमिय्यते चरणसुधा विहितसिनातो न सो भोति ॥ १४ ॥ युम्हातिसेवि तेंभवदेज्यया॥४॥ वे सतय्येव॥कीरतिनो येन रत्ती स कथं वपते सुकतबीज॥१५॥ भवव तिंहि तुम मिमलरूपा॥ विलसिर पमतच्छीजल, परकालिरक्ख मां सदरगवि५

॥ मुरजबंध ॥

गीरतारजतारक्षणे धीरता स्थिरतारसा ॥सारतारश्रुतावंध्या सुरता जन तावकी६

॥ गोमूत्रिका ॥

ये पश्यंति तवेहास्यारविंदं भक्तिबंधुराः॥न पतंति भवे शश्वत्ते विदो भगवन्नराः॥७॥

॥ सर्वतोभद्र ॥

नमासररसामान मारिताक्षक्षतारिमा॥साता म या यामतासा रक्षयाममयाक्षर८

॥ रथपदं ॥

तिर्यङ्नरसुराकीर्णा भासते नमते सभा ॥

त्वन्माहात्म्यात् कृताश्चर्यं याश्रिता ततता श्रिया ॥ ९ ॥

॥ द्व्यक्षरपाद ॥

रैगोरांगोरुगीर्गंगा गौरीगुरुररोगरुक् ॥ गोरंगा गाररोगारिं रिरिरो रैगुरुं गिरिं ॥ १०॥

॥ एकाक्षरपाद ॥

लाललालोललीलालं तततातततिताततेे ॥ ममाममाममममुमा ननानेनोननानन॥११॥

॥ एकाक्षर श्लोक ॥

काकंकि काककंकौकः केकाकोककककेकिक ॥

कककाकुककोकैक ककुःकांकोंककांककं ॥ १२ ॥

॥ असंयोग ॥

मरुभूमौ तपक्लाविव चारुसरोवरं ॥

कुतः सुकृतहीनानां सुलभं तव शासनं ॥ १३ ॥ युग्मं ॥

॥ द्वाभ्यां खड्गसंदानितकं ॥

सारणिः पुण्यवन्याया न्यायमौक्तिकशुक्तिका ॥ कामधेनुर्नयविदां बंधोल्लासन लालसा ॥ १४ ॥ सारं स्याद्वादमुद्रायास्त्रिपदी भवतोऽजसा ॥ सा मेऽस्तु हृदि कांतैका खिलेन रहितेन सा ॥ १५ ॥

॥ मुसलं ॥

श्रीसिद्धार्थकुलव्योमदिवाकर निरंजन ॥

कक्षतेकांतवा मतं तीर्थंकर तवाश्रिताः ॥ १६ ॥

॥ त्रिशूल ॥

भुक्ता या त्वयि नव्याली धन्या धत्तेस्म चेतसा ॥
सामता तामसाकाममकासारगसागर ॥ १७ ॥

॥ हलं ॥

त्रिशलाकुक्षिपाथोजराजहंस जगद्विनो ॥
भोगास्तृणमिव त्यक्तास्त्वयामुक्ति दिदृक्षया ॥ १८ ॥

॥ धनु ॥

सुरासुर नमस्तुभ्यं नमस्यति जिनोत्तम ॥
मन प्रसादसदर्भदलिता शुभवासना ॥ १९ ॥

॥ शर ॥

कथं कर्तु जनो मोहव्यपोहमदहक्रम ॥
मनसा सादर यस्त्वा न स्तौति तिमिरापह ॥ २० ॥

॥ शक्ति ॥

बाल्यो मरुशिर कंपर्सपत्प्रथितविक्रम ॥
मनोजानोकहव्याल मम स्वामी भवाभव ॥ २१ ॥

॥ अष्ट दलकमल ॥

मानितार्यक्रमामार रमामाकंद माधव ॥
वधमार्गे ममाकास सकामाधी प्रतानि मा ॥ २२ ॥

॥ षोडशदल कमल ॥

वनप्या न घनस्वान ध्यानमौन कनत्घन ॥
ज्ञानस्थान जिनश्रीनघनमेनस्स्वन स्व न ॥ २३ ॥

॥ स्तुत्यनामगर्भ बीजपूर ॥

जय हेमवपु श्रीक जगन्मोहापहारक ॥
जराहिवीन सिद्धाक जन्मनीरधि नाविक ॥ २४ ॥

॥ हरा ॥

तुभ्यं नमोस्तुजनयस्थितिकाय भीतिवन्यासुपावक सुरस्तुत वीर नेत ॥
विद्याल ताविपुलमडपहेमरूप कल्याणश्रीकरणदक्ष नतेदमीन ॥ २५ ॥

## ॥ कविकाव्यनामांकं चक्रं. ॥

नग्नाकृत्यपथो जिनेश्वरवरो नव्याब्जमित्रः क्रियादिष्टं तत्वविगानदोषरहितैः सूक्तैः श्रवस्तर्पणः जन्माचिंत्यसुखप्रदः सुरचितारिष्टक्षयो वः सदा दाता शोभनवाग्विधीः क जलदं यामेक्षणः संविदा ॥ २६ ॥

## ॥ चामरबंधः ॥

श्रीमद्धाम समग्रविग्रह मया चित्रस्तवेनामुना नूतस्त्वं पुरुहूतपूजित विभो सद्यः प्रसृद्वैधिमे ॥ ख्यातज्ञातकुलावतंस सकलत्रैलोक्यक्ष्मृतांतरः स्फारक्रूरतरज्वरस्मरभ रः संरब्धरक्षारतः ॥ २७ ॥ इति श्रीमहावीरस्तवनं समाप्तम् ॥

## ॥ अथ श्रीजीरापल्लिपार्श्वस्तवनं ॥

जीरिकापुरपतिं सदैवतं दैवतं परमहं स्तुवे जिनं ॥ यस्य नाम जगतो वशंकरं शंकरं जपति मंत्रवज्जनः ॥ १ ॥ नाथ तत्तव मुखेंडदर्शनं दर्शनं च नयनामृतं स्तुवे ॥ येन मेडुरिततापहारिणा हारिणा लसति पुण्यवारिधिः ॥ २ ॥ विश्वविस्तृत महाप्रभाव ते भावतेज इह मातिनो युगे ॥ उजते दिनकरे हि भासुरे भासुरेश्वरपुरस्य किं भवेत् ॥ ३ ॥ अर्बुदस्य भवता व्यभावि या भावियात्रिकजनैर्ष्वभीतिद ॥ पश्यतोहरभृतापि सारसा सारसाधुनिचिता भवत्तरां ॥ ४ ॥ ग्राममात्रमपिजीरपल्लिका पल्लिकाननसहोदरीव या ॥ त्वत्पदस्थितिबलेन साधुना साधुनायकपुरीवभासते ॥ ५ ॥ त्वां नमस्यशिववार्धितारकं तारकंकणसुमैः प्रपूज्य यः ॥ प्राप्य चिन्मयमनेनसं पदं संपदं स समुपैति शाश्वतीं ॥ ६ ॥ त्वत्पुरः प्रकुरुते प्रभावनां भावनां जिन निधाय यो हृदि ॥ निश्चितं स लभते न डुर्गती डुर्गतीर्णभवसागर प्रभो ॥ ७ ॥ यो दधाति हृदि तेंऽन्हिपंकजं पंकजं मलमधः करोति सः ॥ तस्ययेपि न भवंति पार्श्वतः पार्श्वतस्यतु भवोद्भवभ्रमाः ॥ ८ ॥ त्वत्स्मृतेरपि जना निरामया रामया चरमया निरामया ॥ योगिभूपण भवंति भूपिता भूपिताःकिल सुधाशनाइव ॥ ९ ॥ त्वत्पदप्रणतिलालसादरं सादरं दधति जातुनाध्वनिं ॥ यत्र यांति ननु भानुभानवो भानवोदय नमस्तु तत्र किं ॥ १० ॥ अंतरंगरिपवोऽकृपापराः पापराशिहर पीमयंति मां ॥ सत्यपि त्वयि विभो कृपालये पालयेश शरणागतं ततः ॥ ११ ॥ त्वन्मयं जगति यस्य मानसं मानसंयमनतस्य डुर्धराः ॥ तस्करानलपयः करेणवो रेणवो जिन भवंति तत्क्षणात् ॥ १२ ॥ देवशाखिमणिधेनुदेवता देव तावदिह वांछितप्रदाः ॥ यावदेव तव धामनामजं नाम जंतुमनसि प्रदीव्यति ॥ १३ ॥ ज्ञानिनं जगदिनं निरंजनं

रंजनं त्रिजगत पुरातनं ॥ त्वां स्मरामि सकलंच निष्कलं निष्कलंकमचलं महाब लं ॥१४॥ इत्थं य प्रयत. स्तवीति सततं श्रीजीरपल्लीपुरीवासं पार्श्वजिनप्रभुं प्रकटित प्रौढप्रतापोदयं ॥ सोवश्यं सुभग भविलुरधिकं धर्मार्थकामामृतश्रीभि स्त्रीभिरिव स्वयं गुणगणाश्लिष्टाभिराश्लिष्यते ॥१५॥ इति श्रीजीरापल्लीपार्श्वस्तवन समाप्तम्॥

## ॥ अथ श्रीफलवर्द्धिजिनपार्श्वस्तवनं ॥

सयलाहिवाहिजलहर, समूहसहरणचडपवमाण ॥ फलवद्धिपासनाह सथुणि मो फणय इछफलं ॥ १ ॥ विहुयास विहुयास, विहुयासं पत्तमभिथुणति तुम ॥ अम यरया अमयरया, अमयरया पुणइखमवयण ॥ २ ॥ समणाण समणाण, समणा ण लंघिउं फुरइ सत्ती ॥ विणयाण विणयाण, विणयाणढणभयाहि सुदे ॥ ३ ॥ अ हिरन्ना अहिरन्ना, अहिरन्ना विणियमंति कयपूया ॥ सवाही सवाही, सवाहीणा तुह य नत्ता ॥ ४ ॥ गयवाहा गयवाहा, गयवाहा अरहियापइपसन्ने ॥ परमहिया परमहिया, परमहिया सह न हुति नरा ॥ ५ ॥ सहवणा सहवणा, सहवणामयरि क हवति जणा ॥ सुहयगया सुहयगया, सुहयगया तुह पसाएण ॥ ६ ॥ कणयाउ कणयाउ, कणयाउ रक्खसी तुम भवण ॥ भद्दवओ भद्दवओ, भद्दवओ रिद्धिसिरिया ण ॥ ७ ॥ नाएण नाएण, नाएण चियति लोहसुहउंसि ॥ नयराई नयराई, नयरा ई सुगुणपोराण ॥ ८ ॥ फलवद्धी फलवद्धी, फलवद्धी दाइणा तुमे विहिया ॥ सन्न यरी सन्नयरी, सन्नयरीणतयाइजया ॥ ९ ॥ समणाली समणाली, समणाली ण तहागमे धन्ना ॥ चरणरया चरणरया, चरणरया भाइचत्तसिरी ॥१०॥ निद्दप्पहस्स निद्द, प्पहस्स, निद्दप्पहस्स मोहदले ॥ रयणायर रयणायर, रयणायर गुहिर तुझ नमो ॥ ११ ॥ इत्थं थुउसि सिरिपास जगन्निवास सिगारहारफलवद्धिपुरीसिरीए ॥ बुद्धीयराकयजिणप्पहसूरिवाणी थूयच्चमे वियर अंतररोगमुक्कं ॥ १२ ॥

॥ इति श्रीफलवर्द्धिपार्श्वनाथस्तवनं समाप्तम् ॥

## ॥ अथ श्रीचंद्रप्रभस्वामिस्तवन ॥

॥ संस्कृतं ॥

नमो महसेननरेंद्रतनूज जगज्जनलोचनभृंगसरोज ॥ शरद्भवसोमसमद्युतिकाय दयामय तुभ्यमनतसुखाय ॥ १ ॥ सुखीकृतसादरसेवकलक्ष विनिर्जितदुर्जयभाव विपक्ष ॥ सुरासुरवृंदनमस्कृत नद महोदय कल्पमहीरुहकद ॥ २ ॥

॥ प्राकृत ॥

जय निरसिय तिहुयणजतु भंति जय मोहमहीरुहदलनदति ॥ जयकुवक

लियसमदंतयंति जयजय चंदप्पहवंदकंति ॥ ३ ॥ जय पणयपाणिगणकप्परुक्क जय जगडिय अपयमकसयपक्क ॥ जय निम्मलकेवलनाणगेह, जयजयजिणिंद अप्पडिमदेह ॥ ४ ॥

॥ शौरसेनी ॥

विगदडुहहेडु मोहारिकेदूदयं दलिदगुरुडुरिदमध विहिदकुंमदक्कयं ॥
नाधतं नमदिजोसदटनदवत्सलंजहदिनिच्चदि गर्ति सोददं निम्मलं ॥ ५ ॥

॥ मागधी ॥

असुलसुलविसलनलनाय सेविवपदे नमिल जय जंतुतुदि दिन्नसिवपुलपदे ॥
चलनपुलनिलद संसालिसलसीलुदे, देहि महसामितंसालि सासदपदे ॥ ६ ॥

॥ पैशाचिकं ॥

तलिताखिलतोसतया सततं मदनानलनीलमनानगुणं ॥
नलिनारुणपाततलांनमते जिननो इधतं सशिवं लनते ॥ ७ ॥

॥ चूलिका पैशाचिकं ॥

कलनालिकनातुलतप्पहलं चलनीकल चालुयशप्पसलं ॥
जलनाचनकीतकुनंखुचिलं चिनलावमहंसमलामिचिलं ॥ ८ ॥

॥ अपभ्रंश ॥

सासयसुक्ख निहाणुनाहनदिठो जेहिं तउं पुन्नविहूणउजाणु निफलजम्मु तिहं नरपसुहं ॥ ९ ॥ निम्मल तुह मुहचंडुजे पहुपिक्खुइं पसरिसिउं इयनिरुवमआणंडु तिह मुनिसामी विप्फुरइ ॥ १० ॥

॥ ग्रयं समसंस्कृतं ॥

हारिहारहरहासकुंदसुंदरदेहानय केवलकमलाकेलिनिलय मंजुलगुणगणमय॥ कमलारुणकरचरणचरणन्नरधरणधवल बलसिद्धिरमणिसंगमविलासलालसमलमदल ॥ ११ ॥ नवनवदवजलवाहविमलमंगलकुलमंदिर वामकामकरिकेलिहरणहरिवरगुणबंधुर ॥ मंदरगिरीगुरुसारसबलकलिजूरुहकुंजर देहिमहोदयमेव देव मम केवलिकुंजर ॥ १२ ॥ इति जगदनिनंदन जनहृदि चंदन चंद्रप्रन्न जिनचंद्रवर॥ पद्मापानिष्टुत मम मंगलयुतसिद्धिसुखानि विनो वितर ॥ १३ ॥

इति श्रीजिनप्रन्नसूरिकृतचंद्रप्रन्नस्वामिसत्कं षड्नाषास्तवनं संपूर्णम् ॥

## ॥ अथ श्री वर्द्धमाननिर्वाणकल्याणकस्तवनप्रारंभ ॥

श्रीसिद्धार्थनरेशवशकमलशृंगारचूडामणेर्भव्याना दुरपोहमोहतिमिरप्रोद्भासने ऽह्रमणे ॥ कुर्वे किंचन काचनोज्वलरुचेर्निर्वाणकल्याणकस्तोत्रं गोत्रनिदर्चनीयचरणाम्भोजस्य वीरप्रभो ॥ १ ॥ प्राप्य देव शरदाद्विसप्तति शीतगौ पवनदेवतर्द्धगे ॥ तामुपायत रसेन कार्तिकाऽमावसीनिशि शिवश्रियं भवान् ॥ २ ॥ हस्तिपालकनृपालपालिता पूर्न पूरयतु मन्मन शुचा ॥ यत्र दर्शइव चन्द्रमा भवानस्तमाप भवताप हा पुन ॥३॥ ऊर्जदर्शनिशि दर्शितर्द्धयस्तत्रपुर्यखिलवर्णजा. प्रजा ॥ त्वन्महोदयमही तथाऽधुनाऽप्युत्सव विदधतेऽनुवत्सर ॥ ४ ॥ येर्ध्वनिस्तव पपे श्रव पुटै षोडशप्रहरदेशनाविधौ ॥ तान्निवेश्य धुरि धन्यताजुषा रेखया न खलु सुप्यतेऽन्यत ॥५॥ पुण्यपापफलपाकवर्णनामध्यमध्ययनपंक्तियुक्शत ॥ व्याख्या स्फुटमप्टपद्रुतिव्याकृतीश्र परिषद्पुरस्तदा ॥६॥ जीवति त्वयि जिनेन्द्रभूतिना त्वत्प्रणामविधिभंगभीरुणा ॥ नून मेष्यत न देव केवलज्ञानसपदनुरागभागपि ॥ ७ ॥ यद्विधेयमुपदिश्य गौतम प्रेपि भक्तिभृदपि त्वयाऽन्यत ॥ रोगिण कटुकजायुपानवज्ञ्यायसेऽस्य चरुपे गुणाय तत् ॥ ८ ॥ त्वद्दिदृक्ष्ववतरत्सुरावली या न देहमणिभूषणाशुभि ॥ सा कुहूरजनि रत्नतामसा पूर्णिमानिशमुपाहसद्ध्रुव ॥९॥ निर्वृते त्वयि विलोक्य विष्टप ध्वातपूरपरिपूरितोदर ॥ रोदयत इव रोदसी प्रतिश्रुद्भरेण रुरुदु पुरदरा ॥१०॥ वन्हिवायुजलदेश्वरै सुरैस्तैलपर्णिकरुतागसस्कृते॥भूतिमात्रमपि भूतिधाम ते ऽपस्पृशन् बत न तान् रजोऽस्पृशत् ॥११॥ भक्तितो महितुमीशवासवास्तावकीनदहनुसग्रह व्यधु ॥नूनमह्नविजयाय तावकानुग्रहेण हनुमल्लमिच्छव ॥१२॥ कुग्रहा न तव जातु शासन वीर बाधितुम लभविस्रव ॥ एकक स खलु भस्मकग्रहो बाधते भवदुपेक्षितस्तदा॥१३॥ जग्मुषि त्वयि शिव नराधिपास्तत्क्षण गृहमणीनबोधयन्॥ ये बभु कुनयकाननप्लुषस्त्वत्प्रताप शिखिन कणा इव ॥१४॥ यन्न कश्चन मुनिस्त्वया समं युक्ति मैयरितरैर्जनैरिव॥ दुषमा समयभावलिंगिना व्यंजितेन गुरुनिर्व्यपेक्षिता ॥ १५ ॥ प्रस्थिते त्वयि शिवाय तत्क्षण संमुमूर्छुरविष्टध्वि कुथव ॥ क्षुद्रजीववहुलामत पर सूचयतइव भाविनीं महीं ॥ १६ ॥ यत्र यत्र चरणौ त्वयार्पितौ तत्तदास्पदमगादमापता ॥ एकया पुनरपापया पुरापापयाऽजनि सुरोक्तिनामत ॥ १७ ॥ यत्र मुक्तिमगम शम दुमावाप पापतुहिनार्कतापतत् ॥ प्रीतिमीति तरुकुजभजने नाग नागकरण करोतु न १८ ॥ य पठत्यशठधीस्तव वीरस्तोत्रमेतदवधानसमेत ॥ तत्रभावरिपुरा

